# आथर्वणोपनिषदः ।

श्रीनारायणभट्टकृतदीपिकाख्यटीकासहिता: ।

पण्डितकुलपतिना
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
संस्कृताः प्रकाशिताः ।

द्वितीय संस्करणम् ।



कलिकातानगर्य्याम् ।
नारायणयन्त्रे
मुद्रिता: ।

इं १८६१ ।

# सूचीपत्रम् ।

# शिर उपनिषत्।

ओं देवा ह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति। सोऽब्रवीदहमेकः प्रथममासी-

---

रुद्राध्यायोऽथर्वशिरः सप्तखण्डो ह्यथर्वणः।
शिरो भित्त्वा यतो जातं ततोऽथर्वशिरः स्मृतम्॥

योगमारूढ़स्य महत्पदमारुरुक्षोर्मुनेर्देवादिकृतविघ्नसम्भावनागम्यार्थोपदेशापेक्षा च स्यात्; अतो विघ्ननिवृत्तये उपदेशाय च रुद्रस्तुतिरारभ्यते। किञ्च योगोऽपि तत्प्रसादं विना न सिध्यति। तथा च स्मृतिः।

"न सिध्यति महायोगो मदीयाराधनं विना।
मत्प्रसाद-विहीनानां मन्निन्दापरचेतसाम्।
पशूनां पाशबद्धानां योगः क्लेशाय जायते।
सन्त्यज्याज्ञां शिवेनोक्तां पूजां सन्त्यज्य मामिकाम्"॥ इति।

तत्प्रसादे च निर्विघ्नसिद्धिरुक्ता।

"युञ्जतः सततं देवि! सर्वलोकमयं शिवम्।
महाज्ञानासक्तचित्तस्य तुष्यन्ते सर्वदेवताः॥
तस्मात् सम्पूज्य युञ्जीत मत्प्रसादेन खेचरी।
अन्यथा क्लिश्यतेऽत्यर्थं न सिद्धिर्जन्मकोटिभिः॥ इति।

अमृतविन्दौ, "रुद्राराधनतत्परस्य" इति। तस्मात् रुद्राराधनस्य योगसिद्धाङ्गत्वेनोक्तत्वात् सिद्धिमिच्छता रुद्रोऽप्यवश्यं सेव्य इति रुद्रस्तुतिरारभ्यते, ओं देवा इति॥ आख्यायिकाविद्यास्तुत्यर्था: 'देवाः' इन्द्रियाणि इन्द्रादयो वा 'स्वर्ग'

वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्, सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहम् अधश्चोर्द्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्य्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रञ्च बलिश्च पुरस्ताज्ज्योतिरित्यहमेव, सर्वेभ्यो मामेव

---

सत्त्ववृत्तिं कैलासं वा ऋषिभिर्द्दृतं 'रुद्रम्' आत्मानम् उमापतिं वा। 'आसीत्' व्यत्ययेन प्रथमपुरुषः। 'वर्त्तामि' व्यत्ययेन परस्मैपदम्। 'सः' रुद्रो मल्लक्षणः 'अन्तरादन्तरं' गुह्यादगुह्यं प्रविष्टः 'दिशो व्यन्तरं' जातावेकवचनं, दिशां विविधम् अन्तरम् 'प्राविशत्' प्राविशम्, सर्वात्मा सर्वव्यापी च बभूवेत्यर्थः। 'अपुमान्' नपुंसकम्। 'पुष्करं' पद्मं, 'पुष्करं पङ्कजे व्योम्नि पयः-करिकराग्रयोः। ओषधी-द्वीप-विहङ्ग-तीर्थ-रोगोरगान्तरे' इति विश्वः। अहमेव 'सर्वे' भावाः व्योममेव, स इति सोऽहमेव सर्वात्मकोऽपि व्योममेव व्योमात्मतां शुद्धात्मतां न जहामीत्यर्थः। व्योमशब्दोऽकारा-

स सर्वैः समो यो मां वेद स देवान् वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मण्यान् ब्राह्मण्येन हविर्हविषा आयुरायुषा सत्येन सत्यं धर्मेण धर्मं तर्पयामि स्वेन तेजसा। ततो ह वै ते देवा रुद्रमपृच्छन्, ते देवा रुद्रमपश्यन्, ते देवा रुद्रमध्यायन्, ते देवा ऊर्द्ध्वबाहवो रुद्रं स्तुवन्ति ॥ १ ॥

---

न्तोऽयम्। तर्हि त्वमुत्कृष्टः, अन्ये अपकृष्टा इति ब्रह्मणि वैषम्यं स्यात्? अत आह, सर्वे समा इति। 'समाः' तुल्याः मत्तो भेदकैर्विशेषैः रहिताः, तेन मत्तोऽन्यन्नास्तीति कथमुत्कर्षापकर्षसम्भव इति भावः। ऐक्यज्ञानफलमाह, यो मामिति। साङ्गानपि वेदेत्यनुषङ्गः; ब्रह्म ब्राह्मणैस्तर्पयामीत्यग्रतनेन सम्बन्धः। 'ब्रह्म' वेदः, स ह्यभ्यासेन तृप्तो भवति, तदुक्तं, "विद्यामभ्यसनेनेव प्रसादयितुमर्हसि" इति। 'गां' स्त्रियं 'गोभिः' पुंभिः, गोशब्देन लिङ्गमेव विवक्षितं न सुरभित्वमनुगतश्च जातिः। 'ब्राह्मण्येन' ब्रह्मतेजसा, 'हविः' ओदनादि, 'हविषा' संस्कारकेण सर्पिरादिना. पित्राद्यायुः पुत्राद्यायुषा, सत्येन 'सत्यं' सत्यवादी, सत्यवादि-दर्शनेन तृप्तो भवति। एवं धार्मिको धार्मिकस्य, स्वेनेति यत्तृप्तिहेतुस्तन्ममैव तेजः। तदुक्तम्।

"या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः।
यदपि च किञ्चिद्रमणीयं वस्तु शिवस्तत्तदाकारः" ॥इति।
"यद्यद्विभूति मत्सत्त्वम्" इत्यादि च ॥

'रुद्रमपृच्छन्' तात्पर्य्येण पारमार्थिकं रूपं पुनरपृच्छन्

ओं यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च सूर्य्यस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् ये चाष्टौ ग्रहास्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै वै नमो०
यो वै रुद्रः स भगवान् यच्च भूस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च भुवस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च महस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् या च पृथिवी तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् या च द्यौस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् याश्चापस्तस्मै वै नमोनमः

---

'अपश्यन्' यथाभूतं ज्ञातवन्तः, ततो ध्यातवन्तः, तत उच्चैः स्तुवन्ति स्म ॥ १ ॥

ततो ब्रह्म-विष्णु-स्कन्देन्द्राग्नि-वायु-सूर्य्य-सोमाष्टग्रहाष्ट-

यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च यमस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यश्च मृत्युस्तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्चामृतं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च कृष्णं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च कृत्स्नं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै वै नमोनमः
यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै वै नमोनमः ॥२॥

भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धस्त्वं शान्ति-

---

प्रतिग्रह-भूर्भुवः-स्वः-पृथिव्यन्तरिक्ष-दिवप्--तेज--आकाश--काल-यम-मृत्वमृत--विश्व-स्थूल-सूक्ष्म-शुक्ल--कृष्ण--कृत्स्न--सत्य--सर्व-रूपै-रेक-त्रिंशत्पर्य्यायैः अस्तुवन् अत्र यमपर्य्यायानन्तरमन्तक-पर्य्यायोऽपि पठनीयः, तेन त्र्यम्बक-मन्त्राक्षर-सङ्ख्यया द्वात्रिंशत् पर्य्याया भवन्ति ॥ २ ॥

स्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वम्। अपामसोमममृता अभूमागन्म ज्योतिरविदामदेवान्। किं नूनमस्मान् कृणवदरातिः। किमु धूर्त्तिरमृतं मर्त्यस्य सोमसूर्य्यपुरस्तात् सूक्ष्मः पुरुषः। सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन

---

ब्रह्मरूपेणैकस्त्वं ; विराड्रूपेण स्तुतिमाह, भूरिति। 'आदिः' पादौ 'मध्यम्' उदरम्, ब्रह्मरूपेणैकस्त्वं 'द्विधा बुद्धः' सदसद्रूपेण, 'त्रिधा बुद्धः' गुणत्रयभेदेन। 'परायणं' परमयनं स्थानम्। 'अपामसोमम्' इति त्वयि दृष्टे सर्वं सिद्धमित्यर्थः। 'कृणवत्' छिन्दन् 'अरातिः' शत्रुः, अस्मान् प्रति न किञ्चिदित्यर्थः। 'धूर्त्तिः' हिंसाप्यस्माकं किं त्वदभिरक्षितानां त्वद्रूपमापन्नानां हिंसाकृतदोषाभावात् ; यद्गीतासु, "हत्वापि स इमान् लोकान् न हन्ति न निबध्यते" इति ; अथवा शत्रुकृता हिंसा त्वच्छरणानस्मान् न स्पृशतीत्यर्थः। 'अमृतम्' आदेयं, 'मर्त्यं' हेयञ्च त्वदात्म्या कृतार्थानां नो नास्तीत्यर्थः। सोमश्चासौ सूर्य्यश्च 'सोमसूर्य्यः' तेनोभयात्मक एक इत्यर्थः। सोमसूर्य्य इत्युपलक्षणं पञ्चभूतानि सोमसूर्य्यौ यजमानश्चेत्यष्टमूर्त्तिरीश्वरः 'पुरस्तात्' पूर्वस्यां दिशि उदेतीति शेषः। सूक्ष्मो यः पुरुषः स एव 'सर्वं' स्थूलं सम्पन्नम्।

ननु सर्वभावापत्त्या किमर्थं सृष्टिं तनोतीत्यत आह, जगदिति। जगतां हितं 'जगद्धितं' 'एतदक्षरं' ब्रह्म, जीवभोगापवर्गार्थं कृपया सृष्टिरिति भावः। 'प्राजापत्यं' प्रजापतिरूपेण

सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति, तस्मै महाग्रासाय वै नमोनमः।

हृदिस्था देवताः सर्वा हृदि प्राणा प्रतिष्ठिताः।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः॥

तस्योत्तरतः शिरो दक्षिणतः पादौ, य उत्तरतः स ओङ्कारः, य ओङ्कारः स प्रणवः, यः प्रणवः स

---

ग्रसति, तथा भावादिकं तेनैव रूपेण पालितम् 'सौम्यं' सामोऽन्नं यद्रूपेणाप्यायितं 'सूक्ष्मं पुरुषं' जीवं 'ग्राह्यं' देहभावापन्नम् 'अग्राह्येण' कालरूपेण ग्रसति स्थूलस्य सूक्ष्मेऽन्तर्भावात्. 'वायव्यं' प्राणाख्यं 'वायव्येन' बाह्यवायुरूपेण 'महाग्रासाय' उक्तप्रकारेण सर्वभक्षकाय मृत्युमृत्यवे।

'हृदिस्थाः' अन्तःकरणवर्त्तिन्यः 'देवताः' इन्द्रियाधिष्ठातारः 'प्राणाः' वागादयः त्वम् अन्तर्यामिरूपेण यो हृदि त्वमसि तस्मै नमो नम इत्यन्वयः, अतएव स्वप्ने अन्तःकरणेनैव सर्वेन्द्रियव्यवहार इत्युक्त्वा ध्यानेन देवा उपरताः। इदानीं श्रुतेराख्यायिकामुपसंहृत्य स्वेन रूपेणाह, तिस्र इति। 'तिस्रो मात्राः' अकारोकार-मकाराः सर्वदेवमयाः 'परस्तु' अर्द्धमात्रात्मकः 'सः' शिवः। तस्येति मात्रात्रयातीतो हृदि त्वमसीत्युक्तम्, तत्र सन्देहः, कस्यां दिशि तस्य शिरः? कस्यां वा पादौ? इत्यत उक्तं, 'तस्य' परस्य हृदिस्थस्य उत्तरतः शिरो वर्त्तते, तेन उत्तरमार्गेण गतानां यातायातेन भवतो रुद्रमुखादुपदेशलाभात्; 'दक्षिणतः पादौ' तेन दक्षिणमार्गगामिनां गतागते भवतः, पादयोर्गमनशीलत्वात्; य उत्तरतः स

सर्वव्यापी यः सर्वव्यापी सोऽनन्तः, योऽनन्तस्तत्तारं, यत्तारं तच्छुक्लं, यच्छुक्लं तत्सूक्ष्मं, यत् सूक्ष्मं तद्वैद्युतं, यद्वैद्युतं तत् परं ब्रह्म, यत् परं ब्रह्म स एकः, यः एकः स रुद्रः, यो रुद्रः स ईशानः, य ईशानः स भगवान् महेश्वरः ॥ ३ ॥

अथ कस्मादुच्यते ओङ्कारः, यस्मादुच्चार्य्यमाण एव प्राणान् ऊर्द्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः। अथ कस्मादुच्यते प्रणवः, यस्मादुच्चार्य्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते

---

ओङ्कारः, स प्रणव इति तथा प्रसिद्धः; 'सर्वव्यापी' सर्वव्यापकोऽपि ब्रह्मवाचकत्वात् सोऽनन्तः, अन्यथा सर्वव्याप्त्यसम्भवात्; तारम् 'शुक्लं' निर्म्मलं 'सूक्ष्मम्' इन्द्रियाद्यग्राह्यम्। कथं तर्हि तज्ज्ञानम्? अत उक्तम् 'तद्वैद्युतं' स्वप्रकाशं 'परं ब्रह्म' सर्व्वबृहत् अन्येषामात्मलाभस्य तदधीनत्वात्; अत एवैकः अन्यात्मनस्तदपेक्षत्वेन तदनतिरेकात्। 'सः' रुद्रः "एको रुद्र" इति मन्त्रवर्णात्, 'ईशानः' स्वतन्त्रः, अतएव 'भगवान्' षड्विधैश्वर्य्यसम्पन्नः एष 'महेश्वरः' अनवधिकैश्वर्य्यः सर्वेऽप्येते प्रवृत्तिनिमित्तभेदेऽप्येकार्थाः समानाधिकरणवत् ॥३॥

पर्य्यायत्व-शङ्का-निवृत्तये त्रयोदशानामपि प्रवृत्ति-निमित्त-भेदं पृच्छन्ति, अथेति। ऊर्द्ध्वोत्क्राम-शब्दयोरोङ्कार इति निपातनम्, उपायस्य उपायान्तराविरोधान्न व्याकरण-विरोधः शङ्क्यः, एवमुत्तरेष्वपि। चतुर्वेदात्मकं ब्रह्म 'ब्राह्मणेभ्यः'

प्रणवः। अथ कस्मादुच्यते सर्वव्यापी, यस्मादुच्चार्य्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्य्यमाण एव तिर्य्यगूर्द्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः। अथ कस्मादुच्यते तारं, यस्मादुच्चार्य्यमाण एव गर्भ-जन्म-व्याधि-जरा-मरण-संसार-महाभयात् तारयति त्रायते च तस्मादुच्यते तारम्। अथ कस्मादुच्यते शुक्लं, यस्मादुच्चार्य्यमाण एव क्लन्दते क्लामयति च

---

अध्येतृभ्यः 'प्रणामयति' प्रणतं नम्रं करोति 'नामयति' प्रकरोति तत्तन्म्रमिव करोति स प्रणवः, 'पललं' तिलपिष्टं तस्य 'पिण्डं' गुड़िका, इव शब्दो वाक्यालङ्कारे; यथा तिलपिष्टपिण्डं सर्वतः 'स्नेहेन' तैलेन व्याप्तम्, एवं पटे तन्तुमिव कार्य्यमात्रे 'ओतञ्च प्रोतञ्च' तानवितानभावमापन्नं 'शान्तरूपं' ब्रह्म 'उच्चार्य्यमाणः' वाचा प्रयुक्तः प्रतीतः एवं सर्वत्र, 'अनु' अनुसृत्य 'प्राप्तः' भेदमापन्नः प्रतिमिव देवेन, तथा वाचकभावेन 'व्यतिषक्तः' सम्बद्धः सर्वात्मकं ब्रह्म तद्रूपेण व्याप्नोति वाचकतया वा सम्बध्नाति सर्वव्यापीत्यर्थः। एवं प्रणवस्य सर्वव्यापित्वादिकम् अर्थाभेदविवक्षया द्रष्टव्यम्। उच्चार्य्यमाणेऽस्मिन् 'तस्य' ओङ्कारस्य अन्तो ब्रह्मैक्यान्नोपलभ्यते तेनानन्तः। धातु 'क्लन्दते' कन्दते क्रन्दते ध्वनि-

तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते सूक्ष्मं, यस्मादुच्चार्य्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति, सर्वाणि चाङ्गान्यभिमृशति, तस्मादुच्यते सूक्ष्मम्। अथ कस्मादुच्यते वैद्युतं, यस्मादुच्चार्य्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम्। अथ कस्मादुच्यते परम्ब्रह्म, यस्मात् परमपरं परायणञ्च बृहद्बृहत्या बृंहयति तस्मादुच्यते परम्ब्रह्म। अथ कस्मादुच्यते एकः, यः सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाजः

---

रूपेण व्यज्यते 'क्लामयति च' उदात्ततया उच्चारणे प्रयत्नाधिक्यात् शरीरं क्लमयुक्तं करोति तत् शुक्लम्; पूर्वोत्तरपदयोराद्यन्तलोपः। सूक्ष्मो भूत्वा अङ्कुरावस्थायामेवापि 'शरीराणि' देहावयवान् स्वहेतुप्राणाभेदेन प्रयत्नाभेदेन ब्रह्माभेदेन वा 'अधितिष्ठति' आरोहति 'अभिमृशति' सम्बध्नाति व्याप्नोति च सूक्ष्मम्; तस्मात् अव्यक्ते महति 'तमसि' अविद्यायां 'द्योतयति' तन्निरासेन ब्रह्मप्रकाशं करोति तत् वैद्युतम् 'परमपरं' सगुणं निर्गुणञ्च 'परायणं' परमगति, तस्मात् परमित्यन्वयः।

ब्रह्मशब्दनिमित्तमाह, बृहदिति। यस्मात् 'बृहत्' महत्, तस्मात् ब्रह्मेत्यन्वयः। निमित्तान्तरमाह, बृहत्येति। 'बृहत्या' मायया 'बृंहयति' वर्द्धयति कार्य्यं, तेन 'परं ब्रह्म' ओङ्कारः। यः सर्वान् प्राणान् प्राणाभिव्यङ्ग्यान् वेदान्, अर्थपक्षे वागादीन् 'सम्भक्ष्य' संहारकाले आत्मनि उपसंहृत्य

संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः। साकं स एको भूतश्चरति प्रजानां तस्मादुच्यते एकः। अथ कस्मादुच्यते रुद्रः, यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः। अथ कस्मादुच्यते ईशानः, यः सर्वान् देवानीशते ईशानीभिर्जननीभिश्च

---

सम्भक्षणेन कृत्वा 'संसृजति' तैरेकीभवति, स्वयन्तु अजः वाचा विरूपनित्ययेति लिङ्गात्, नित्यं विज्ञानमिति श्रुतेश्च, पुनः सिसृक्षायां विसृजति चेति कार्य्यकारणयोरभेदात् मृदादिवदेकः, अत एव "कृते तु प्रणवो वेदः" इत्याद्युपपन्नम्। कारणत्वेनैक्यम् उक्त्वा फलत्वेनापि ऐक्यं मन्त्रेणाह, तीर्थमिति। 'तीर्थम्' उपायः तद्भजनानुष्ठानम् ; दिक्चतुष्कग्रहणं तत्रानात्वोपलक्षणार्थं नानामार्गैः अभ्युपायैः सर्वेषाम् 'इह' ईश्वरे 'सङ्गतिः' फलत्वेन प्राप्तिः। 'साकं' सहैव सः 'एको भूतः' सिद्धः 'चरति' सृष्ट्या प्रवर्त्तते भक्षयति वा प्रजानामशुभकर्म-विपाकम् ; तदुक्तं कविभिः,

"बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे" ॥ इति।

वाच्यधर्मेण वाचको व्यवह्रियते। 'ऋषिभिः' ज्ञानिभिः द्रुतं गम्यते इति रुद्रः। 'ईशते' ईष्टे इति ईशानः, ईश्यते एभिरिति ईशिन्यः ताभिः, देवान् स्वेच्छया नियुनक्ति अजातानां विनियोगासम्भवात्, जननीभिश्च शक्तिभिः' जनयन्ति

शक्तिभिः। अभित्वा शूर! इन्द्र! नुमः अदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुष इति तस्मादुच्यते ईशानः। अथ कस्मादुच्यते भगवान् महेश्वरः, यस्माद्भक्ताञ्ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्य्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः, तदेतद्रुद्रचरितम् ॥ ४ ॥

---

ईशते। ईशानत्वे मन्त्रसङ्गतिमाह, अभीति। हे 'शूर!' इन्द्र! परमेश्वर! 'त्वा' त्वाम् 'अभि' अभितो नुमः' आभिमुख्येन अतिशयेन स्तुमः, 'अदुग्धाः' दुग्धरहिताः पयोऽर्थिनो वत्साः 'धेनवः' दोग्ध्रीः गा इव स्तुवन्ति, द्वितीयार्थे प्रथमा; 'अदुग्धाः' प्रसूताः 'धेनवः' गावो वत्सानिवेति न व्याख्यातम्, स्नेहसाम्येऽप्युपासकस्य मातृता, उपास्यस्य वत्सतेति हीनोपमादोष-प्रसङ्गात्। 'जगतः' जङ्गमस्य 'तस्थुषः' स्थावरस्य ईशानम्, आदरार्थं पुनः प्रयोगः, 'स्व ईशं' दिव्यदृष्टिम्। 'भक्ता' भजनकर्त्ता, तस्यैवार्थो ज्ञानेनेति; यद्वा 'भक्ताः' भक्तान् ज्ञानेन 'भजति' सेवते अनुगृह्णाति चेति भग, शब्दार्थः, 'वाचं' वेदाख्यां संसृजति ब्रह्मादिमुखे विसृजति स्वमुखादिति वान् शब्दार्थः। महेश्वरशब्दार्थमाह, यद्विति। 'भावान्' विषयान् 'परित्यज्य' त्याजयित्वा वेदमुपदिश्य तदर्थबोधन-द्वारा विषय-वैराग्यमुत्पाद्य अधिकारिणं कृत्वा दत्तेन आत्मज्ञानेन मनःस्थिरतायै च अष्टाङ्गयोग-जन्यैश्वर्य्येण चभक्तान्

एको ह देवः प्रदिशोनुसर्वाः
पूर्वो ह जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः
प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः॥

---

'महति' पूजयति; तेन परानुग्रहेण च 'महीयते' महिमानं याति जगद्विख्यातयशा भवति; तेन भगवान् महेश्वरः, "अक्षरसाम्येन निर्ब्रूयात्" इति न्यायेनेदं निर्वचनम्।

ननु परब्रह्मपर्य्यायादारभ्य उच्चार्य्यमाण एवेति कस्मान्नोक्तम्? अत आह, तदेवद्रुद्रचरितमिति। नाम-नामिनोरैक्यबोधनायोङ्कारोपक्रमस्य आदित आरभ्य रुद्रस्यैवैतद्वर्णितमित्यर्थः॥ ४॥

ईशस्य प्रतिज्ञातमैक्यमुपपादयितुं साधनानि च वक्तुमवयवशः प्रणवस्योपासनायाः पृथक् फलानि प्रतिपाद्य ईशभक्तिप्रधानेन ज्ञानेनैव परमपुरुषार्थ-सिद्धिरिति प्रतिपादयितुञ्चोत्तरखण्ड आरभ्यते, एको ह देव इति। एक एव देवः सर्वा दिशः 'प्रजातः' सर्वदिक् रूपो बभूव; दिग्ग्रहणं तत्स्थवस्तूनामप्युपलक्षणम्।

ननु कथमेकस्यानेकत्वसम्भवः? इत्याशङ्क्य सर्वाश्चर्य्ये भगवति किं किं रूपं न सम्भवति? इत्याशयेन परिहरति, पूर्वो हेति। पूर्वः 'स उ' स एव 'गर्भे' जगतो मध्यावस्थायां, स एव 'अन्तोऽपि' सर्वान्ते वर्त्तमानोऽपि। स एव उत्पत्त्युपाधिना कालविरोधं परिहरति, स एवेति। ननु कथमस्यानुभवः? इत्याशङ्क्याह, प्रत्यङ्ङिति। हे 'जनाः'!

एको रुद्रो न द्वितीयाय तस्मै
य इमाँल्लोकानीशत ईशानीभिः ।
प्रत्यङ्जनास्तिष्ठति सञ्चुकोचा-
न्तकाले संसृज्य विश्वा भुवनानि गोप्ता ॥
यो योनिं योनिमधितिष्ठत्येको
येनेदं सर्वं विचरति सर्वम् ।
तमीशानं वरदं देवमीड्यम्
निचाय्येमां शान्तिमत्यन्तमेति ॥

---

आबाल-स्त्री-गोपालाः ! सर्वजनीनमनुभवं पश्यतेति श्रुते-र्वचः ; किं तत् ? 'सर्वतोमुखः' आदित्यवत् सर्वेषां सम्मुखः, 'प्रत्यङ' अवस्थात्रयानुभूयमानाहम्प्रत्ययवेद्यात्मरूपेण, तिष्ठति यः, स ईशः ।

द्वितीयगन्धमपि निषेधति, एक इति । स द्वितीयमैच्छ-दिति श्रुतेः प्राप्तां सहायापेक्षां निषेधति, न द्वितीयाय तस्थाविति । तत्तु लीलामात्रं, द्वितीय-चेतनाभावादेको द्रष्टेति श्रुतेः ; 'सञ्चुकोच' इति 'अन्तकाले' प्रलयकाले सङ्कोचं कृतवान्, 'संसृज्य' व्याप्य ।

ननु बहवः शरीरिणश्चेतना दृश्यन्ते ; एकत्वन्तु ईश्वरा-पेक्षमेवेत्यत आह, यो योनिं योनिमिति । सर्वे जीवा व्युच्चरन्तीति श्रुतेः, विस्फुलिङ्ग इव ततो भिन्न एव इति भावः । ज्ञानशक्तिवत् क्रियाशक्तिरप्येकस्यैवास्तीत्याह, सर्व-मिति । सर्वं 'सञ्चरति' प्रविशति 'विचरति' नाना गच्छति च, 'येन' शक्तिमता इत्यर्थः । सर्वगुणैः सम्पन्नः स एव सेव्य

क्षमां हित्वा हेतुजालस्य मूलं
बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे।
रुद्रमेकत्वमाहुः॥

शाश्वतं वै पुराणमिषमूर्जेण पशवोऽनुनामयन्तं मृत्युपाशान्। तदेतेनात्मन्नेतेनार्धचतुर्थेन

---

इत्याह, तमिति। 'वरदं' सकामानामप्युपास्यं 'देवं' स्वतो द्रष्टारम् 'ईड्यं' स्तुत्यं वेदानां 'निचाय्य' नितरां सर्वभावेन पूजयित्वा 'इमाम्' ईश्वरावस्थामेव 'अत्यन्तशान्तिं' कैवल्याख्याम् एति।

तत्प्राप्त्यन्तरङ्गोपायानाह, क्षमामिति। 'हेतुजालस्य' हेतुवाद-कल्पना-समूहस्य 'मूलं' कारणभूतां 'क्षमां' भूमिम्, अविवेकदृष्टिलक्षणां 'हित्वा' त्यक्त्वा 'बुद्ध्या' निपुणधिया 'सञ्चितं' स्वीकृतं वस्तु रुद्रे 'स्थापयित्वा' समर्प्य "तत् कुरुष्व मदर्पणम्" इत्युक्तत्वात्, रुद्रमेव 'एकत्वम्' एकभावमेकरसमेति इत्यनुषङ्गः; 'आहुः' इति आहुराचार्य्या इत्यर्थः। कीदृशं रुद्रं? 'शाश्वतं' सर्वकालव्यापिनं, 'पुराणं' पुरापि नवं न कदाचिज्जीर्णम्, 'इषम्' अन्नम्, 'ऊर्जेन' बलेन सह 'पशवः' द्वितीयार्थे प्रथमा, पशून् 'अनुनामयन्तम्' अधीनीकुर्वन्तं भक्तेभ्योऽर्पयन्तमिति यावत्; मृत्युपाशान् नामयन्तं न्यक्कुर्वन्तं तेभ्यो मोचयन्तमिति यावत्, भक्तिमुक्तिप्रदमित्यर्थः।

इदानीं प्रणवस्य मात्राभेदेन ध्यानभेदस्य फलानि वक्तुं प्रथमं प्राधान्यात् चतुर्मात्रस्य तस्य फलमाह, तदेतेनात्मन्निति। 'तत्' तस्मात् पूर्वोक्तप्रकारात् 'एतेन' प्रणवेन 'आत्मन्' आत्मनि 'एतेन' आदृतेन आगतेन आत्मप्रतिपाद-

मात्रेण शान्तिं संसृजति पशुपाशविमोचनम्। या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद् ब्रह्मपदम्। या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम्। या सार्ध-चतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम्। तदेतदुपासीत मुनयो

---

केन, अर्द्धा चतुर्थी मात्रा यस्य तेन ओङ्कारेण शान्तिं संसृजति ईश्वरः ; तथा, पशुपाश-विमोचन-शान्तिद्वारा कर्मपाशहानिं करोति। प्रत्येकमात्राणां फलमाह, या सेति। 'प्रथमा' अकाररूपा अर्द्धचतुर्थी मात्रा, चतुर्थी अर्द्धरूपा मात्रेत्यर्थः, 'सर्वदेवत्या' ब्रह्म-विष्णु-रुद्र-देवत्या 'अव्यक्तीभूता' अवर्णकत्वात् अव्यक्तीभूता वर्णरूपेणानिर्वाच्या 'खं' मूर्द्धानं प्रविचरति। 'शुद्धा' इति विशुद्धसत्त्वात्मक-त्वात् पद्मनामकं सहस्रदलं पद्ममिति प्रसिद्धम्। तदुक्तं, "मूर्ध्नि प्रतिष्ठितं पद्मं सहस्रदलसंयुतम्" इति ; षोड़शदलं वा। तदिति। 'तत्' तस्मात् कारणात् 'एतत्' पद्मनामकं पदं चतुर्थमात्राद्वारा उपास्ते। तस्य पद्मान्तरवैलक्षण्यमाह,

**वाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणञ्चेति॥**

**वालाग्रमात्रं हृदयस्य मध्ये**
**विश्वं देवं जातरूपं वरेण्यम्।**

---

मुनयो वाग्वदन्तीति। 'अवाक्' अधोमुखं, यच्छ्रुतिः, "अवाङ्मुखश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्" इति। याज्ञवल्क्योऽपि।

"षोड़शच्छन्दसंयुक्तं शिरः पश्चादधोमुखात्।
निर्गत्यामृतधाराभिः' इति।

विशेषान्तरमाह, न तस्य ग्रहणमिति। गृह्यते अनेनेति 'ग्रहणं' नालं, तत् यस्य नास्ति, अधोमुखस्य तस्य मूर्द्धोपरि नालत्वादर्शनात्। एतत् भित्त्वा ये यान्ति, तेषां गतिमाह, अयमिति। 'अयं पन्थाः' ओङ्कारोपासन-लक्षणः, 'येन' उत्तरेण पथा देवा 'यान्ति' गच्छन्ति, 'पितरः' ज्ञानरहित-कर्म्मोपासनेन गच्छन्ति। ये न पितर इति पाठे, ये पितरः, ते उत्तरेण पथा न गच्छन्तीत्यर्थः। नेष्टापूर्त्तमात्रकारिणां ज्ञानरहितानामुत्तरेण पथा गतिरस्ति। अथवा 'पितरः' पितृमार्गाधिपाः कव्यवालादयः, तेषां हि ज्ञानित्वादुत्तरमार्ग एव; तत्रापि विशेषः, केचित् परमेव यान्ति; यदुक्तम्। "ब्रह्मणा सह ते सर्वे मुच्यन्ते" इति। केचित् 'अपरं' ब्रह्मलोकादि, येषाममति ज्ञानपरिपाके कल्पान्तरे पुनर्जन्म भवति। केचित् 'परायणं'

तमात्मस्थं ये तु पश्यन्ति धीरा:
तेषां शान्तिर्भवति नेतरेषाम् ॥
यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चा-
क्षमां हित्वा हेतुजालस्य मूलम् ।
बुद्धग्रा सञ्चितं स्थापयित्वा
तु रुद्रे रुद्रमेकत्वमाहुः ॥

---

वैकुण्ठ-कैलासादि। तत्र के परमेव यान्ति ? इत्यपेक्षायामाह, बालाग्रमात्रमिति। दुर्लक्ष्यत्वेन सूक्ष्मत्वोक्तिः, हृदयस्य मध्ये गह्वरे 'विश्वं' जाग्रदवस्थाभिमानिनं 'देवं' द्योतनात्मकं 'जातरूपं' सुवर्णवर्णं, जातरूपं जगद् यस्मादिति, 'वरेण्यं' वरणीयम् 'आत्मस्थं' बुद्धिप्रकाशकं 'शान्तिः' मुक्तिः, इतरेषां तदनभिज्ञानात्।

इतरेषामप्राप्तौ हेतुं त्याजयितुमाह, यस्मिन्निति। यस्मिन्निति विषयनिर्देशः, क्रोधविषयं क्रोधञ्च 'हित्वा' विस्मृत्येत्यर्थः, या च तृष्णाविषया ताञ्च तृष्णां हित्वा, क्षमाग्रहणं सर्वसाधनोपलक्षणं, लब्धे तत्त्वे साधनान्यपि चेत्यर्थः, "येन त्यजति सन्त्यजौ" इत्युक्तेः। 'हेतुजालस्य' विकल्पराशेः मूलभूतां 'क्षमां' भूमिम् अविवेकदृष्टिञ्च हित्वा 'बुद्धग्रा' ब्रह्मार्पणधिया सञ्चितं विवेकदृष्ट्या रुद्रे स्थापयित्वा समर्प्य "यज्जुहोषि यदश्नासि" इत्यादि स्मृतेः।

ननु विष्णौ ब्रह्मणि चेति वक्तव्ये रुद्रे इति किमर्थमुच्यते ? इत्याशङ्काह, रुद्रमिति। रुद्रम् एकत्वमापन्नम् आहुराचार्य्या इत्यपेक्षितम्। अयं भावः। भगवच्छब्दवाच्यो

रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योममिति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद् व्रतमिदं पाशुपतं यद्भस्म नाङ्गानि संस्पृशेत् तस्माद् ब्रह्म तदेतत् पाशुपतं पशुपाशविमोक्षणाय ॥ ५ ॥

---

महेश्वर एव शुद्धं ब्रह्म, स एव स्वमहिम्ना चित्तैश्वर्य्येण नामानि रूपाणि चापन्न इति। रुद्रो हीति। 'शाश्वतेन' अनवच्छिन्नेन 'पुराणेन' अपरिणामिना 'ऊर्जेन' ऐश्वर्य्येण तपसा च रुद्ररूपम् 'इषम्' अन्नं भूतजातं नियन्ता, "तृन् न लोकेति" षष्ठीनिषेधः। सर्वभूतजातं नियच्छति ऐश्वर्य्यतपसोः शाश्वतं रुद्रस्य दशाव्ययत्वात्, तथा हि।

"ज्ञानं विरागितैश्वर्य्यं तपः शौचं क्षमा धृतिः।
स्रष्टृत्वमात्मसम्बन्धो ह्यधिष्ठातृत्वमेव वा।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे" ॥ इति ॥

भस्मधारणमीश्वरस्य प्रसिद्धम्। तद्यथा, भस्म लीलया धृतं नायासकारि, तथा जगदपीति वक्तुमग्न्यादीनां भस्मोपमामाह, अग्निरित्यादि। विश्वं भस्मविशेषेण धृतमित्यर्थः। 'स्थलं' पृथिवी 'सर्वम्' आकाशादिकमपि 'इदं' जगत् 'चक्षूंषि' इन्द्रियाणि।

ननु किमर्थममङ्गलं भस्म दधाति? अत आह पशुपतेः रुद्रस्येदं व्रतम्; यस्मादिति। यद्यपि पूर्णकामस्य न च

योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये । यो रुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीर्वीरुध आविवेश । यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमो-नमः । यो रुद्रोऽप्सु यो रुद्र ओषधिषु यो रुद्रो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी

---

व्रतेनापि, प्रयोजनं तथापि भक्तानुग्रहार्थं, व्रते मया कृते भक्ता अपि तथा कुर्य्युरिति ; 'यत्' यस्मात् भस्म नाङ्गानि संस्पृशेदिति, व्रतं पशुपतिना प्रोक्तं पशुपतिना धृतञ्च भस्म, तस्मात् ब्रह्म ज्ञेयमिति स्तुतिः । फलमाह, तदिति । 'पशूनां' जीवानां 'पाशस्य' बन्धस्य, 'विमोचनाय' त्यागाय 'एतत्' व्रतं ; भस्मधारणविधिः फलविशेषश्च कालाग्निरुद्रोपनिषदि द्रष्टव्यः ॥ ५ ॥

अग्न्यादीनां रुद्ररूपतया रुद्रस्य चाग्निरूपतया अग्न्याद्यधिकरणतया च नमस्कर्त्तुं मन्त्रत्रयमाम्नातं योऽग्नौ रुद्र इत्यादि प्रकृत्यान्तः पादमव्यय इति प्रकृतिभावः, 'ओषधीः' व्रीह्याद्याः 'वीरुधः' गुल्माः ; एकैकग्रहणं प्रदर्शनार्थम् ।

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति" स्मृतेः ।

"या या प्रकृतिरुदारा यो योऽप्यानन्दसुन्दरो भावः ।
यदपि च किञ्चिद्रमणीयं वस्तु शिवस्तत्तदाकारः" ॥

इति च स्मृतेः ।

'इमाः' इमानि विश्वानि 'चक्लृपे' कृतवान् ; पृथिवी

द्विधा त्रिधा धर्त्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमोनमः।

मूर्धानमस्य संशीव्याप्यथर्वा हृदयञ्च यत्।
मस्तिष्कादूर्ध्वः प्रेरयत्यवमानोऽधिशीर्षतः॥
तद्वा अथर्वणः शिरो देवकोशः समुब्जितः।
तत् प्राणोऽभिरक्षति शिरोऽन्त मथो मनः॥

---

द्विधा त्रिधा धर्त्ता धारितेति। ऋता सत्यासत्या धारा मतौ पृथिवी द्विधा त्रिधा शेषरूपेण दिग्गजरूपेण राजन्यरूपेण च 'धारिता' धृता। शेषनागरूपेण धृता इत्युक्ते पाताल एव नागरूपेण तिष्ठतीति शङ्का स्यादत आह, नागा इति। तदुक्तं नीलरुद्रेण,

"नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्वेभ्यो नमः" ॥ इति।

'नागाः' दिग्गजा वा, तेऽप्यन्तरिक्षस्था दन्तैः पृथिवीं बिभ्रति।

इदानीमथर्वशिरसोऽस्य ग्रन्थस्योत्पत्ति-प्रकारमाह, मूर्द्धानमिति। 'अथर्वा' अथर्वर्षि-शरीराधिष्ठाता 'पवमानः' वायुः प्राणः 'अस्य' अथर्वणो मुनेः मूर्द्धानं 'संशीव्य' संशोर्य्य विदार्य्य 'मस्तिष्कात्' मस्तकात् ऊर्द्ध्वः सन् यदस्य 'हृदयं' हृदिस्थं ग्रन्थरूपं तत् 'शीर्षतः' अधिशीर्षे 'प्रेरयत्' प्रेरितवान्। तद्वेति। 'अधिशीर्षतः, शिर ऊर्द्ध्वतः, यस्मात् प्राणेन प्रेरितं, 'तत्' तस्मात् 'वै' निश्चितम् अथर्वणः 'शिरः' एतद् ग्रन्थरूपं 'देवकोशः' देवानामिन्द्रादीनां कोशो निधिः 'समुब्जितः सुगोपितः सुरक्षितः। तद्ग्रन्थरूपमुद्भूतं सत् केन रक्षितम्? अत आह, तत् प्राण इति। 'तत् शिरः'

न च दिवो देवजनेन गुप्ता
न चान्तरिक्षाणि न च भूम इमाः ।
यस्मिन्निदं सर्वमोतप्रोतं
तस्मादन्यं न परं किञ्च नास्ति ॥
न तस्मात्पूर्वं न परं तदस्ति
न भूतं नोत भव्यं यदासीत् ।

---

अथर्वशिरः प्राणोऽभिरक्षति प्राणाधीनत्वादध्ययनस्य, प्राणस्य अन्नाधीनस्थितिकत्वादन्नमप्यभिरक्षति । तर्हि सुषुप्ते कस्मान्नाधीत इत्यत आह, मन इति । 'मनसा मनस्यभिमन्वानधीयेयेत्यथाधीत' इति श्रुतेः मनोऽप्यभिरक्षति ।

यं देवमेषोपनिषत् स्तौति, तस्योपनिषदुत्पत्तिप्रकार-कथनेन महत्त्वमुक्त्वा प्रकृतं तदेव स्तवनमनुसन्धत्ते न चेति । देवादीनां नवत्वं गुणसङ्करेण द्रष्टव्यम् ; तद्यथा, द्यौर्लोकः सात्त्विक-राजस-तामस-भेदेन त्रिधा ; त्रिविधोऽपि प्रत्येकं सङ्करेण नवधा ; एवमन्तरिक्षं भूमिश्च । यद्वा जम्बूद्वीपस्य नवखण्डत्वात् इतरयोरपि तथा खण्डाः कल्प्याः । 'देवजनेन' देवजनकेन, अथवा, देवाः 'जनाः' सेवका यस्य तेन रुद्रेण 'गुप्ता' गोपिता रक्षिता । भूम इमा इति छान्दसो वर्णलोपः, भूमय इमाः गुप्ता इति । न च केवलं गुप्ताः, किन्तु व्याप्ता अपि इत्याह, यस्मिन्निति । ओतं प्रोतं तन्तुष्विव पट आततं प्रततञ्च ऊर्ध्वं तन्तुभिरावयनं तिर्यक् तन्तुभिः प्रवयणं 'यस्मात्' देवात् न ह्यन्यत् 'परं' भिन्नमस्ति देवसत्त्वायतत्वात् जगत्सत्त्वस्य, 'परम्' उत्कृष्टं वा नास्ती-

सहस्रपादेकमूर्द्धा व्याप्तं
स एवेदमावरीवर्त्ति भूतम् ॥
अक्षरात् सञ्जायते कालः कालाद् व्यापक उच्यते ॥
व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्य्यते प्रजाः। उच्छ्वसिते तमो भवति, तमस आपोऽप्स्वङ्गुल्या मथिते

---

त्यर्थः। वर्त्तमानव्याप्तिमुक्त्वा भूतभविष्यतोरपि व्याप्तिमाह, न तस्मादिति। यत् भूतं भव्यं वा अस्ति तदपि तस्मात् पूर्वं परञ्च नासीत् न भविष्यति च इत्यपि बोध्यम्।

नन्वेकेन कथमनेकं व्याप्तम्? अत आह, सहस्रेति। सहस्रपात् कार्य्यरूपेण 'एकमूर्द्धा' कारणरूपेण सहस्रपाच्चासावेकमूर्द्धा च सहस्रपादेकमूर्द्धा तेन व्याप्तमिदम्; कारणेन कार्य्यव्याप्तिर्मृदादौ प्रसिद्धा; न केवलं तिलतैल-दधिसर्पिरादिवत् व्याप्तिमात्रम्; किन्तु स एवातिशयेन आप्नोति, 'आवरीवर्त्ति' सर्वांशेन व्याप्नोति; न तु खलु चक्रादिवत् ततोऽन्यत् किञ्चिदस्ति। 'अक्षरात्' कूटस्थात् 'कालः' सङ्कर्षणः हन्त्रधिपः क्षणादिव्यवहारनिमित्तभूतः सञ्जायते, 'कालाद्व्यापक उच्यते' सति काले व्याप्य व्यापक सञ्ज्ञां लभते; 'भोगायमानः' सर्पशरीरमिव सर्वतः सङ्क्षिप्य यदा 'शेते' उपरतक्रियो भवति, तदा 'संहार्य्यते' संहर्त्ता भवतीत्यर्थः।

सम्प्रति सृष्टिमाह, उच्छ्वसिते इति। 'उच्छ्वसिते' कार्य्यजननोत्सुके ईश्वरे सति 'तमः' अज्ञानं प्रसृतं भवति,

**मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति, फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति, ब्रह्मणो वायुः, वायोरोङ्कारः, ओङ्कारात् सावित्री, सावित्र्या गायत्री, गायत्र्या लोका भवन्ति। अर्चयन्ति तपः सत्यं मधु च्वरन्ति यद् ध्रुवम्।**

---

तमसः आकाशादिक्रमेण आपः, अप्सु अङ्गुल्या 'मथिते' मथने कृते सति तक्रमिव जायते। ततः 'शिशिरे' विलम्बे सति 'शिशिरं' शीतं भवति; शीतार्थाः शब्दाः विलम्बार्था अपि भवन्ति, यथा, शीतकोऽयं विलम्बकारीति गम्यते। अथ वा, 'शिशिरे' वायौ वाति शिशिरं भवतीत्यर्थः। शीतलं सत् पुनर्मथ्यमानं फेनो भवति, फेनात् कालेन अण्डं भवति, 'ब्रह्मा' प्रजापतिः, 'वायुः' प्राणाख्यः, "मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्" इत्युक्तेः। वायोरोङ्कारः, ओङ्कारात् 'सावित्री' गायत्र्याः पूर्वावस्था व्याहृत्याख्या. "प्रणवादक्षरत्रयाद्व्याहृतित्रयम्" इत्युक्तेः। 'गायत्री' तत्पदादिका, 'गायत्र्याः' वेदत्रयद्वारा त्रयो लोका भवन्ति। अर्चयन्ति लोकान् बुधाः, कुतः? यतो लोकः तपः सत्यं यच्च ध्रुवं 'मधु' अमृतं मोक्षाख्यं तत् च्वरन्ति। शरीरसाध्यत्वात् तप आदीनां, शरीरस्य च सृष्टिप्रधानत्वात् इतरथा विद्यात्, यतः सुषुप्तिवज्जाड्यात्तन्न निवर्त्तते, अत एव ईश्वरस्य जीवानुग्रहाय सृष्टिनिर्माणमिति।

किं तत् परमं तपः? इत्याह, आप इति। तपःसाधनत्वादयं मन्त्रस्तप इत्युक्तः; तस्मात् प्रयत्नेन प्राणायामोऽप्यावर्त्तनीयः, इति भावः। 'तपःसत्ये' लोकाख्ये ध्रुवं

एतद्धि परमं तपः। आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति ॥ ६ ॥

य इदमथर्वशिरो ब्राह्मणोऽधीते, अश्रोत्रियः श्रोत्रियो भवति, अनुपनीत उपनीतो भवति, सोऽग्निपूतो भवति, स वायुपूतो भवति, स सूर्य्यपूतो भवति, स सोमपूतो भवति, स सत्यपूतो भवति, स सर्वैर्देवैर्ज्ञातो भवति, स सर्वैर्वेदैरनुध्यातो भवति, स सर्वेषु तीर्थेषु स्नातो

---

मधु 'चरन्ति' प्रस्तुवन्ति, 'लोकाः', भूरादयः; तेन तानर्चयन्ति; एतत् 'हि' यस्मात् परमं 'तपः' तपःफलं गायत्रीशिरः साध्यमिति चार्थः। सम्प्रत्यध्ययनफलमाह, य इदमथर्वशिर इति। 'ब्राह्मणः' इति वचनात् उपनीतस्यापि क्षत्रियादेर्नाधिकार इति गम्यते, मुख्यत्वावबोधनाय वा ब्राह्मणग्रहणम्। अधीते इति, अर्थबोधपर्य्यन्तमध्ययनं पाठमात्रस्य निन्दाश्रुतेः। न चाल्पायासेन कथं बहुयत्नसाध्यं फलं स्यादिति [illegible] अल्पायासेनाप्यमृतादेर्महात्म्य-जनकत्वादिदर्शनात्, वस्तु[illegible] पर्य्यनुयोगायोगात् ॥ ६ ॥

अनधीतवे[illegible]मात्राध्ययनेनैतादृशो भवतीत्याह, अश्रोत्रिय इति। [illegible]त्रियः' वेदमधीत्य तदर्थानुष्ठाता; 'अनुपनीतः', द्विती[illegible]नादि-रहितः; अग्निपूतः 'अग्निना' हुतेन यथा [illegible] [illegible]युना' प्राणायामैर्यथा पूतः, 'सूर्य्येण' उपस्थितेन यथा पूतः 'सोमेन' सोमयागेन यथा पूतः, 'सत्येन' सत्यभाषितेन [illegible] पूतः, 'सर्वैः' धर्मसाधनैरनुष्ठितैर्यथा पूतः, तथा [illegible]र्थः। 'वेदैः' इति वेदानां देवतारूपेण

भवति, तेन सर्वैः क्रतुभिरिष्टं भवति, गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति, इतिहास-पुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति। प्रणवानामयुतं जप्तं भवति। स चक्षुषः पङ्क्तिं पुनाति। आसप्तमात् पुरुषयुगान् पुनातीत्याह भगवानथर्वशिरः, सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति। तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यमों सत्यम्। इत्यथर्ववेदे शिर उपनिषत् समाप्ता ॥ १ ॥

---

चेतनत्वादनुध्यानं सम्भवति। 'पुरुषयुगान्' पितृपक्षीयान् मातृपक्षीयांश्च। सप्तमात् पुरुषादात्मानमभिव्याप्य पुनातीत्याह 'भगवान्' अथर्वा।

सकृदादिपाठस्य फलमाह, अथर्वशिर इति। 'एवमेव अनुप्रविशति' इति विशेषमपश्यन् सामान्यमेव प्रविशति, तच्च सामान्यरूपं ब्रह्मैव, मोक्षं यातीत्यर्थः। यद्वा, 'एः' विष्णुः 'वः' शिवः, तयोः समाहारः 'एवं' हरि-हर स्वरूपं, तदेव अनुप्रविशतीति; "एर्विष्णुर्वो महेश्वर" इति चैकाक्षरनिर्घण्टः। हरोपास्त्या हरिप्राप्तिः, अविरुद्धैक-मूर्त्तित्वात्तयोरिति।

किं तत्सामान्यरूपम् ? यदनुप्रविशतीत्यपेक्षायामाह, सत्यमिति। ओङ्कारवाच्यं सत्यमित्यर्थः, हरिहररूपमप्येत-

इभयवाच्यं भवति, एकवाच्यं वा ओङ्कारवाच्यं सत्यमेव, साधनान्तरं विनैव अनुप्रविशतीति। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपदवाक्यानां दीपिकाथर्वमस्तके॥

इत्यथर्वशिर उपनिषद्दीपिका समाप्ता॥ १॥

---

# गर्भोपनिषत्

ओं पञ्चात्मकं पञ्चसु वर्त्तमानं
षडाश्रयं षड्गुणयोगयुक्तम्।
तं सप्तधातुं त्रिमलं द्वियोनिं
चतुर्विधाहारमयं शरीरम्॥

---

ओं गर्भसंस्था निरूप्यात्र गर्भोपनिषदित्यपि।
पञ्चखण्डाष्टमान्मुण्डात् पैप्पलादभिधा तथा॥

गर्भवासान्मुच्यत इत्युक्तम्; तत्र को गर्भः? कथञ्च तद्वासः? इत्यपेक्षायां संसारवैराग्यार्थञ्च जन्ममरणादिदुःखं निरूपणीयमिति गर्भोपनिषदारभ्यते। तत्र गर्भस्य मातृपितृशरीरापेक्षत्वात् प्रथमं शरीरस्वरूपमाह, पञ्चात्मकमिति। 'पञ्चात्मकं' पञ्चभूतात्मकं 'पञ्चसु' धारणादिषु आनन्दादिषु च 'वर्त्तमानं' प्रवर्त्तमानं; पञ्चस्वित्यत्र वीप्सा द्रष्टव्या, प्रश्नान्तरे पञ्चकानां चित्वात्; 'षडाश्रयं' षण्णां मधुरादिरसानाम् आश्रयतीति आश्रयं भोगायतनमित्यर्थः। षड्गुणयोगयुक्तं गानादिकलाकुशलत्वात्; सप्त 'धातवः' रसादयो यस्मिन् तत्; सप्तधातुकत्वभावो बहुव्रीहौ, अग्रे तु कपिसप्तधातुकमिति निर्देशः शेषाद्विभाषेति। 'त्रिमलं' त्रयो मला नख-

पञ्चात्मकमिति कस्मात्, पृथिव्यापस्तेजो वायुराकाशमित्यस्मिन् पञ्चात्मके शरीरे का पृथिवी, का आपः, किं तेजः, को वायुः, किमाकाशम्। तत्र पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी, यद् द्रवं ता आपः, यदुष्णं तत्तेजः, यत्सञ्चरति स वायुः, यच्छुषिरं तदाकाशम्। तत्र पृथिवी धारणे, आपः पिण्डीकरणे, तेजः प्रकाशने, वायुर्व्यूहने, आकाशमवकाशप्रदाने। पृथक् श्रोत्रे शब्दोपलब्धौ, त्वक् स्पर्शे, चक्षुषी

---

लोम-केशा यत्र तत्; मूत्रादीनान्तु अशितपीतमलत्वात् न देहमलत्वम्। अथवा, कफादीनां श्लेष्मादिरूपाणां मलत्वम्। द्वियोनिं' 'द्वयोः' मातापित्रोः 'योनिः' उत्पत्तिर्यस्य। चतुर्विधाहारमयं' लेह्यपेयखाद्यचोष्यलक्षणचतुर्विधाहारविकार इत्यर्थः।

गुरुणा प्रतिज्ञाते शिष्यो विशेषज्ञानाय पृच्छति, पञ्चात्मकं कस्मादिति। अत्र पञ्चसु वर्त्तमानं कथम्? इति प्रश्नो द्रष्टव्यः, उत्तरानुरोधात्, इतिशब्दान्तमुत्तरे। पृथिवीप्रभृतीनां किं लिङ्गम्? इति पृच्छति, का पृथिवीति। काठिन्यादिषु पृथिव्यादिलिङ्गमित्युत्तरयति, तत्र यदिति। शरीरे तेषामुपयोगं दर्शयन् पञ्चसु कथं वर्त्तमानमित्यस्योत्तरमाह, तत्रेति। 'व्यूहनं' मेलनम्। ननु माभूदवकाशप्रदानम्? इत्यत आह, पृथुस्त्विति। पृथुः 'एषः' शरीरं यदर्थः। अवकाशं विना पार्थिवं न स्यादिति भावः। द्वितीयपञ्चक-

रूपे, जिह्वा रसने, नासिका घ्राणे, उपस्थ आनन्दने, अपानमुत्सर्गे, बुद्ध्या बुध्यति, मनसा सङ्कल्पयति, वाचा वदति। षडाश्रयमिति कस्मात्, मधुराम्ल-लवण-तिक्त-कटु-कषाय-रसान् विन्दतीति, षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-

---

माह, श्रोत्रे इति। श्रोत्रे द्वे शब्दोपलब्धौ वर्त्तेते। तृतीय-पञ्चकमाह, उपस्थ इति।

षडाश्रयं कस्मादित्यत्र षड्गुणयोगयुक्तञ्च कस्मादित्यपि द्रष्टव्यम्। आद्यस्योत्तरमाह, मधुरेति। 'विन्दति' लभते जानातीत्यर्थः। द्वितीयस्योत्तरं षड्जेति। एते गायनेषु प्रसिद्धाः; एतत् सप्तस्वरग्रहणं षड्रागोपलक्षणार्थं षड्गुणेत्युक्त-त्वात्। ते च,

'श्रीरागोऽथ वसन्तश्च पञ्चमो भैरवस्तथा।
मेघनादश्च विज्ञेयाः षष्ठो नटनरायणः'॥ इति

तेषां प्रत्येकं सप्त स्वरा भवन्ति, षट् च षट् च रागिण्यो देव्यः स्त्रियो भवन्तीति षट्त्रिंशत् ज्ञेयाः; ता यथा,

गौड़ी कोलाहली धाली द्रविड़ी मालव-कौशिका।
षष्ठी स्यादेव गन्धारी श्रीरागाच्च विनिर्गता॥
आन्दोली कौशिकी चैव रामगरी पुटमञ्जरी।
गुञ्जरी चैव देशाख्या वसन्तस्य प्रियास्त्विमाः॥
भैरवी गुर्जरी चैव भाषा वेलीवती तथा।
कर्णाटी रक्तसिंहा च पञ्चमात्ता विनिर्गता॥
त्रिगुणा स्तम्भतीर्था च आभीरी ककुभा तथा।
विराड़ी चैव सामेरी भैरवाच्च विनिर्गता॥

धैवत-निषादाश्चेतीष्टानिष्ट-शब्दसंज्ञाः प्रणिधा-नाद्दशविधा भवन्ति ॥ १ ॥

सप्तधातुकमिति कस्मात्, शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुर इति। यथा

---

वङ्गाला मधुरा चैव कामदा चोकमादिका।
कम्बुग्रीवा च देवाला मेघरागाद्विनिर्गता॥
त्रोटकी च———नदा चैव प्रकीर्त्तिता।
गान्धारी शुद्धमुद्गारी जाता नदनरायणात्॥ इति।

तेषां मिथुनानां योगोऽस्मिन् शरीरे भवतीति षड्गुण-योगयुक्तमित्यर्थः; इति शब्द एतदर्थविवक्षार्थः।

ननु पृथिव्यादीनां वृत्तयो धारणादयस्त्रयः पञ्चका उक्ताः, ते किं सर्वे पुरुषप्रवृत्तिनिवृत्त्योः उपयुज्यन्ते? आहोस्वित् कतिपये? इति संशये निर्णयमाह। इष्टानिष्टानीति। धारणादिषु 'इष्टानिष्टानि' प्रवृत्तिहेतुभूतानि 'दशविधा' दशविधानि भवन्ति। भूतवृत्तानां धारणादीनां पञ्चानाम् इष्टानिष्टत्वाभावेन प्रवृत्तिनिवृत्त्यजनकत्वात् शब्दादीन्येव दश इष्टानिष्टानि भवन्तीति भावः। इष्टानिष्टत्वे द्वारमुक्तम्। शब्देति। 'शब्द-प्रणिधानं' शब्दप्रयोग-जनकत्वं; सञ्ज्ञाप्रणिधानं प्रत्यय-जनकत्वं; व्यवह्रियमाणाः प्रतीयमानास्तु दशैव शब्दादय इष्टानिष्टत्वेन प्रवृत्तिनिवृत्तिजनका इत्यर्थः॥ १॥

उभयत्र प्रश्नस्याप्युपलक्षणम्। समाधानन्तु तत्र भविष्यति। शुक्ल इत्याद्यव्यवहार्य्यद्रव्याणां प्रकारभेदकथनं; न त्वेत एव सप्तधातवः, तेषामग्रे वक्ष्यमाणत्वात्; शुक्लपाण्डुरयोः कृष्ण-धूम्रयोः पीत-कपिलयोश्चावान्तरभेदो द्रष्टव्यः; नीलञ्च कृष्णे-

देवदत्तस्य द्रव्यादिविषया जायन्ते। परस्परं सौम्यगुणत्वात् षड़्विधो रसः, रसाच्छोणितं, शोणितान्मांसं, मांसान्मेदो, मेदसः स्नायवः, स्नायुभ्योऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातः शुक्रं, शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति, हृदयेऽन्तराग्निः, अग्निस्थाने

---

ऽन्तर्भाव्यम् ; चित्रञ्च सर्व्ववर्णेषु यथालाभम्। 'देवदत्तस्य' पुंसां 'द्रव्याणि' सप्तप्रकाराणि 'विषयाः' भोग्यानि 'जायन्ते' सम्पद्यन्ते। तेषां 'परस्परम्' अन्योऽन्यं 'सौम्यगुणत्वात्' अनुकूलगुणत्वात्; यथा, ओदनादीनां व्यञ्जनादयोऽनुकूलाः, तेषां परिणामे षड्विधो रसः, वर्णतः शुक्लादिरूपः, स्वादनो मधुरादिरूपो भवति। चित्ररूपस्य च षट्स्वेवान्तर्भावात्।

शोणितादीन् सप्त धातूनाह, रसादिति। 'रसः' धातुमूलं, न स्वयं धातुः ; तादर्थ्यात्तु कैश्चित् धातुत्वेनोक्तः ; रस धातुवादिनान्तु भेदः। स्नायोरैक्यं द्रष्टव्यम्। मज्ज इति। मज्जन् शब्दस्य पञ्चम्येकवचने अनो लोपः। स्तोस्नुभिश्च आवर्त्तते इति। 'शुक्रशोणितसंयोगात्' आशुक्रशोणितसंयोगमारभ्य 'वर्त्तते' अस्तित्वं भजते इत्यर्थः।

धातूनां स्थानमाह,

हृदि व्यवस्थानीति। इत्येतान्युक्तानि धातुरूपाणि 'हृदि व्यवस्था येषां' तानि हृदि व्यवस्थानि ; सप्तम्या अलुक् ; अतएव धातुषु न्यासो हृदय उक्तः, 'धातुषु प्राणेषु हृत्स्थले' । इति

पित्तं, पित्तस्थाने वायुः, वायुतो हृदयं, प्राजापत्यात् क्रमात् ॥ २ ॥

ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं

---

पुनर्हृदये कानि ? इत्यत आह, हृदये इति। हृदये अन्तराग्निर्वर्त्तते, अन्तरश्चासावग्निश्च, 'अग्निः' ओजः ; तदुक्तं प्रपञ्चसारे। "शुक्रं परिणतं हि स्यादोजो नामाष्टमी दशा" इति। अग्निस्थाने पित्तमिति। 'अग्निः' ओजः, स एव 'स्थानम्' आधारः, तत्र पित्तम, अग्नौ तेजोरूपे प्रवर्त्तकं पित्तमित्यर्थः। पित्तस्थो 'वायुः' वातः, वायुं विना प्रवृत्त्यनुपपत्तेः। हृदयान्तरोजःपित्तवाता वर्त्तन्ते इत्यर्थः। एतत् कफस्याप्युपलक्षणं, दोषाणां वातपित्तकफानां समानदेशत्वस्यौचित्यात्।

ततः किम् ? इत्याह, वायुत इति। वायुतो 'हृदयं' लिङ्गं प्राजापत्यात् क्रमात् प्रवर्त्तते ; प्राजापत्यः क्रमो यथा, स आत्मानं द्वेधा अपातयत्, पतिश्च पत्नी च भवतीति ; प्रजापतिर्यथा एकः सन् द्विधाभूतः, तथा पित्रुर्हृदयोपलक्षितं लिङ्गमपि द्विधा भवति ; वायुघातेन दीपादिव प्रदीपः, कुसुमादिव गन्ध इति। न स मूलोत्क्रम आशङ्कनीयः ; तेन शरीरं वातपित्तकफात्मकमुच्यते ; यद्वा, प्राजापत्यः क्रमः' धूमादिमार्गः, "अग्ने संवत्सरो वै प्रजापतिः" इत्यादिना प्रजापतिव्रतोक्तो द्रष्टव्यः। स च आरोहावरोहक्रमः, "तद् य इत्थं विदुः" इत्यादिना छान्दोग्ये उक्तः। गीतायाञ्च,

"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते" ॥ इति ॥२॥

प्राजापत्यात् क्रमात् पञ्चम्याहुती ऋतुकाले प्रयोगादित्य-

भवति, सप्तरात्रोषितं वुद्बुदम्, अर्द्धमासाभ्यन्तरे पिण्डं, मासाभ्यन्तरे कठिनं, मासद्वयेन शिरः, मासत्रयेण पादप्रदेशः, चतुर्थे गुल्फ-जठर-कटि-प्रदेशाः, पञ्चमे पृष्ठवंशः, षष्ठे मुख-नासिकाक्षि-श्रोत्राणि, सप्तमे जीवेन संयुक्तः, अष्टमे सर्वलक्षण-सम्पूर्णः। पितूरेतोऽतिरेकात् पुरुषः, मातूरेतोऽतिरेकात् स्त्री, उभयोर्वीजतुल्यत्वान्नपुंसकं व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना

---

न्वयः। एतेन त्रिमलं कस्मात्? इति प्रश्न उत्तरितः, कफादीनां श्लेष्मादिमलरूपत्वात्। ऋतुकाले योषिद्धातुपोषकं पुंवीजं भवति; तेन पुंसः सम्प्रयोगे स्त्रियास्तेजो विशेषो दृश्यते। 'कललम्' ईषद्घनं 'वुद्बुदं' वर्त्तुलम्। यास्केन तु अन्यथोक्तम्; तद्यथा, "एकरात्रोषितं कलिलं भवति, पञ्चरात्राद्बुद्बुदः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्वुदः, पञ्चविंशतिरात्रात् स्वस्थितो युक्तो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशः, मासचतुष्टयेन त्वग्व्यादेशः, पञ्चमे मासि नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रञ्च भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्वाङ्गसम्पूर्णो भवति"। 'जीवेन' जीवलिङ्गेन चलनादिना।

पितुरिति। अनेन द्वियोनि कस्मात्? इति परिहृतम्। 'व्याकुलितमनसः' अन्धादिविक्षिप्तचित्तान्निषेकः? 'अन्योऽन्यस्य, स्त्रीपुंसस्य वायुना परिपीड़ितं यत् शुक्रं, तस्य द्वैवि-

भवन्ति। अन्योऽन्यवायु-परिपीड़ित-शुक्रद्वैध्याद् द्विधा तनू स्याद्युग्माः प्रजायन्ते। पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादि-ज्ञानाक्षराक्षरमोङ्कारं चिन्तयतीति तदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोड़श विकाराः शरीरे तस्यैव देहिनः। अथ मात्राशित-पीत-नाड़ी-सूत्रगतेन प्राण आप्यायते। अथ नवमे मासि सर्वलक्षणज्ञानसम्पूर्णो भवति, पूर्वजातिं स्मरति, शुभाशुभञ्च कर्म्म विन्दति॥ ३॥

---

ध्यात् 'तनुः' शुक्रस्वरूपं द्विधा स्यात्; ततो युग्माः प्रजायन्ते। 'पञ्चात्मकः' पञ्चभूतात्मकः पिण्डः 'समर्थः' चिन्तनादौ, 'पञ्चात्मिका' शब्दादिविषया 'चेतसा' अन्तःकरणेन गन्धरसादिविषयं ज्ञानं यस्याः सा गन्धरसादिज्ञाना बुद्धिर्भवति; सा 'क्षरम्' अनित्यम् 'अक्षरं' नित्यं मोक्षञ्च चिन्तयति; 'तदेकाक्षरं' ब्रह्म प्रणवं चिन्तयति, ज्ञात्वा प्रकृतयोऽष्टौ विकाराः षोड़श जायन्ते इति शेषः। तदुक्तम्;

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः"॥ इति।

तत्र मुख्यव्यापाराभावेन शिशुः कथं वर्द्धते? इत्यत आह, अथेति। 'मात्रा' जनन्या 'अशितपीत' इत्यविभक्तिको निर्देशः, अशितपीतेन इत्यर्थः, बालकस्तु रतिसमये पुरुषासनवन्मातुः सम्मुखो वर्द्धते पितृप्रतिशरीरत्वात्; तथा च, या अस्य नाभिसम्बद्धा नाड़ी मातुर्हृदयेन सम्बध्यते, सैव सूत्रं;

पूर्वयोनि-सहस्राणि दृष्ट्वा चैव ततो मया।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः।
जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः॥
यन्मया परिजनस्यार्थे कृतं कर्म्म शुभाशुभम्।
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः॥
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्।
यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये महेश्वरम्॥
अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम्।
यदि योन्याः प्रमुच्येऽहं तत् प्रपद्ये नारायणम्॥

---

तद्भतेन अन्नरसेन तस्य प्राण आप्यायते; अतएव जातमात्रस्य शिरसि कर्णद्वयमध्यदेशे मातृहृदयास्थिचिह्नलेखा दृश्यते, सा मातुः सम्मुखत्वं व्यनक्ति। सर्वेति। 'सर्वैर्लक्षणज्ञानैः' मनुष्यत्वादिजातिव्यञ्जकैः अवयवैः, अथ च सर्वेषां लक्षणेन ज्ञानकरणानामिन्द्रियाणां 'ज्ञानेन' दर्शनश्रवणादिना समाकीर्णः 'भवति' सम्पद्यते, 'पूर्वजातीः' प्राक्तनजन्मानि 'विन्दति' लभते जानीते इत्यर्थः॥ ३॥

तस्याभिलाषमाह, आहारा इति। 'विविधाः' श्व-शूकरादिभोग्या अपि; एतेन शरीरं कस्मात्? इति प्रश्नस्य, शीर्य्यतीति व्युत्पत्त्या, उत्तरं दत्तम्। पीताश्चेति नानायोनिषु जातत्वात्। 'जन्म जन्मेति', जन्मनः प्रादुर्भावः एकजन्मानन्तरं द्वितीयं जन्म। 'परिजनस्य' पुत्रकलत्रादेः। एकाकीति, कर्त्तुरेव पापसम्बन्धो नार्जितद्रव्य-भोक्तुरित्य-

अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम्।
यदि योन्याः प्रमुच्येऽहं तत् सांख्यं योगमभ्यसे॥
अशुभ-क्षयकर्त्तारं फलमुक्ति-प्रदायकम्।
यदि योन्याः प्रमुञ्चामि ध्याये ब्रह्मसनातनम्॥

अथ योनिद्वारं सम्प्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्ममरणानि, न च कर्म्म शुभाशुभं विन्दति॥ ४॥

शरीरमिति कस्मात्, अग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति, तत्र कोष्ठाग्निर्नामाशित-पीत-लेह्य-चोष्यं पचति। दर्शनाग्नी रूपाणां दर्शनं करोति। ज्ञानाग्निः

---

त्वार्थः। इदं लिङ्गम्। 'अभ्यसेत्' अभ्यसेयम्। दुःखेन जन्ममरणानि न स्मरतीत्यग्रतनेन सम्बन्धः। अस्मरणे हेत्वन्तरमाह, जातमात्रेति। 'वायुना' मायारूपेण; तदुक्तम्।

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"॥ इति।

'विन्दति' जानाति॥ ४॥

श्रियन्ते इति, श्रयन्ते इति वक्तव्ये इयट्। 'ज्ञानाग्निः' शरीराग्निः भोक्ता शुभाशुभस्य, 'दर्शनाग्निः' प्रमाता, 'कोष्ठाग्निः'।

शुभाशुभञ्च कर्म्म विन्दति। त्रीणि स्थानानि भवन्ति, मुखे आहवनीय, उदरे गार्हपत्यो, हृदि दक्षिणाग्निः, आत्मा यजमानो मनो ब्रह्मा लोभादयः पशवो धृतिर्दीक्षा सन्तोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्म्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भाः मुखमन्तर्वेदिः चतुष्कपालं

---

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।

प्राणापान-समायुक्तः पचाम्यन्नं चतुर्विधम्" ॥ इत्युक्तः।

अन्त्यादिक्रमेण त्रयाणां लक्षणमाह, तत्रेति। अग्निरिति। अनेन चतुर्विधाहारमयं कथमिति प्रश्नस्योत्तरमुक्तम् भवति; स च गार्हपत्यो भूत्वा नाभ्यां तिष्ठति। दर्शनाग्निरिति। स चतुरस्र आहवनीयो भूत्वा मुखे तिष्ठति। ज्ञानाग्निरिति, स चार्द्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति। 'विन्दति' लभते भोक्तेत्यर्थः।

अत्राग्नित्रये सति शरीरे यज्ञदृष्ट्योपासनमाह, त्रीणीति। 'आहवनीयः' दर्शनाग्निः, 'गार्हपत्यः' कोष्ठाग्निः, 'दक्षिणाग्निः' ज्ञानाग्निः; अग्नित्रयं स्थानत्रये स्मृत्वा आहवनीयादिबुद्धिः कार्य्या। आत्मा यजमानः अधिपतित्वात्; मनो ब्रह्मा सोम्यत्वात्; लोभादयः पशवः बध्यत्वात्; कर्म्मेन्द्रियाणि हवींषि ज्ञानाग्नौ होमार्हत्वात्; शिरः कपालं तत्साम्यात्; केशा दर्भाः विक्षिप्तत्वात्; मुखमन्तर्वेदिः मुख्यस्थलत्वात्।

इदानीं शरीरे अवयवविभागमाह, चतुरिति। तदुक्तं याज्ञवल्क्येन;

"द्वौ शङ्खौ कपालानि चत्वारि शिरसस्तथा"। इति।

शिरः षोड़श पार्श्वदन्तपटलानि सप्तोत्तरं मर्म्मशतं साशीतिकं सन्धिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतानि अस्थीनि च ह वै त्रीणि शतानि षष्टिः सार्द्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पला जिह्वा

---

"अष्टाकपालं शिर" इति तु यास्कः। षोड़शेति। षोड़शपार्श्वाणि, षोड़शदन्ताः षोड़शाष्टदन्तस्थलानि षोड़शपटलानि पार्श्वस्थलानि ; एवं द्वितीयभागे चतुःषष्टिदन्ताः स्थलैः सह ; तदुक्तम्।

"स्थलैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः" इति। "पार्श्वकाः स्थलकैः सार्द्धं सर्वादेश द्विसप्ततिः" इति। सप्तेति। तदुक्तम् ; सप्तोत्तरं मर्म्मशतमिति। साशीतिकमिति। तदुक्तं ; द्वे च सन्धिशते तथेति। अवान्तरभेदे न्यूनाधिक्यं स्मृतावुक्तम्। सनवकमित्यादि। नवसंख्याः परिमाणमस्येति, नवकं नवकत्वेन सह वर्त्तते सनवकं, सधीरं सानुकूलमितिवद्भावप्रधानो निर्देशः नवस्नायुशतानि इत्यर्थः। तदुक्तम् ; "शिरः शतानि सप्तैव नवस्नायुशतानि च" इति। पञ्च मज्जाशतानीति। 'मज्जा' पेशी ; तदुक्तम् ; "पञ्च पेशीशतानि च" इति। अस्थीनि चेति। तदुक्तम् ; "तथास्थ्नाञ्च सह षष्ट्या शतत्रयम्" इति। अर्द्धचतस्र इति। चतस्रः कोट्यः एका चार्द्धकोटीत्यर्थः। इदन्तु स्थूलकेशाभिप्रायेण, सूक्ष्माभिप्रायेण तु याज्ञवल्क्योक्तम् बोद्धव्यम्।

यथा, "रोमणां कोट्यस्तु पञ्चाशच्चतस्रश्च तथापराः।
सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह।

पित्तप्रस्थं कफस्याढ़कं शुक्रकुड़वं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात्। पैप्पलादं मोक्षशास्त्रं पैप्पलादं मोक्षशास्त्रमिति॥

इति गर्भोपनिषत् समाप्ता॥ २॥

---

वायवीयैर्विगण्यन्ते विभक्ताः परमाणुभिः"॥ इति।

'हृदयशब्देन' रसः, जिह्वाशब्देन च जलमुच्यते; तदुक्तम्; "रसस्य नव विज्ञेया जलस्याञ्जलयो दश"। इति।

पित्तप्रस्थमिति। पित्तस्य 'प्रस्थं' सपादमानीद्वयं, मानी तु तुरुष्काणां सेरः। तदुक्तम्; पञ्च पित्तमिति। अञ्जलय इति वर्त्तते। कफस्याढ़कमिति। चतुःप्रस्थं तथाढ़कम् इति। 'शुक्रकुड़वम्' इति। शुक्रस्य द्वे प्रसृती इत्यर्थः। याज्ञवल्क्येन तु "श्लेष्मौजसोस्तावदेव रेतसस्तावदेव तु" इति कफशुक्रयोः समपरिमाणत्वमुक्तम्। मेदप्रस्थौ द्वाविति। याज्ञवल्क्येन तु द्वौ मेद इत्युक्तम्। अञ्जलिग्रहणं वर्त्तते। अनियतमिति। याज्ञवल्क्येन तु नियम उक्तः, "सप्तैव तु पुरीषस्य चत्वारो मूत्रमेव च" इति। अञ्जलय इति वर्त्तते, तत्तु प्रायोऽभिप्रायेण; निष्कर्षे क्रियमाणे तु नास्ति नियमः; अनियमे हेतुः आहारपरिमाणादिति; तस्मिन्नधिके अधिकं, न्यूने न्यूनमित्यर्थः। पिप्पलादेन प्राप्तं पैप्पलादं; द्विरुक्तिः समाप्त्यर्था।

अत्र प्रसङ्गान्मागधपरिभाषोच्यते पलादिज्ञानार्थम्। तद्यथा;—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्।
अतः प्रयोग-कार्य्यार्थं मानमत्रोच्यते मया।
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः।

त्रसरेणुस्तु पर्य्याय नाम्ना वंशी निगद्यते ।
जालान्तरगतैः सूर्य्यकरैर्वंशी विलोक्यते ।
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ।
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ।
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद् द्वयं कोल उच्यते ।
क्षुद्रो मोरटकश्चैव द्रङ्क्षणः स निगद्यते ।
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिका ।
अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ।
विड़ालपदकञ्चैव तथा षोड़शिका मता ।
करमध्यं हंसपदं सुवर्णं कवलग्रहः ।
उदुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते ।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ।
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्तितम् ।
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते ।
प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः ।
अष्टमानञ्च विज्ञेयं कुड़वाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ।
शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढ़कम् ।
भाजनं कंसपात्रन्तु शौनक इति ।

इति गर्भोपनिषद्दीपिका समाप्ता ॥ २ ॥

# नादविन्दूपनिषत्।

ओम् अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः।
मकारस्तस्य पुच्छं वा अर्धमात्रा शिरस्तथा ॥ १ ॥
पादौ रजस्तमस्तस्य शरीरं सत्वमुच्यते।
धर्मश्च दक्षिणं चक्षुरधर्मश्चोत्तरं स्मृतम् ॥ २ ॥
भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनोः।
स्वर्लोकः कटिदेशे तु नाभिदेशे महर्जगत् ॥ ३ ॥
जनलोकस्तु हृदये कण्ठदेशे तपस्ततः।
भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः ॥ ४ ॥
सहस्राक्षमिति चात्र मन्त्र एव प्रदर्शितः।

---

ओं प्रणवः पञ्चधाकारोकार-मैर्बिन्दुनादयुक्।
अन्त्यो नादस्ततो वर्णास्त्रिखण्डे नादविन्दुनि ॥

तत्राद्यमात्रात्रयं सार्द्धमात्रहंसाभिधानपक्षिरूपकेण तात्-द्विविनक्ति, ओं अकार इति। 'पक्षः' पतत्रं, येन पक्षीत्युच्यते 'पुच्छम्' अन्त्यत्वात्। 'वै' प्रसिद्धौ, 'शिरः' उत्तमाङ्गम्, ऊर्द्ध्व-लोकफलत्वात्, रजस्तमः पादौ अधस्त्वसामान्यात्। 'सत्त्वं शरीरं' सर्वाधारत्वात्, धर्माधर्मौ चक्षुषी गतिहेतुत्वात्।

सप्त लोकान् हंसशरीरे विभज्य दर्शयति, भूर्लोक इत्या-दिना। औत्तराधर्य्यसाम्यात् भूरादीनां पादाद्याश्रयत्वम्। भुवो लोक इति। भुवश्च महाव्याहृतेरिति सकारस्य उत्व-रेफ-योर्विधानात् उत्वपक्षे उत्वे गुणे च रूपम्। 'महर्जगत्' महर्लोकः। भ्रुवोर्ललाटमध्ये च सत्यलोकः, 'तुः' चार्थे।

**एवमेनं समारूढ़ो हंसं योगविचक्षणः ॥ ५ ॥**
**न बध्यते कर्मचारी पापकोटि-शतैरपि ।**
**आग्नेयी प्रथमा मात्रा वायव्येषा वशानुगा ॥ ६ ॥**
**भानुमण्डल-सङ्काशा भवेन्मात्रा तथोत्तरा ।**
**परमा चार्द्धमात्रा च वारुणीं तां विदुर्बुधाः ॥ ७ ॥**

---

सहस्राह्न्यमिति चात्र मन्त्र एव प्रदर्शितः। सम्मतिरूपेण स यथा, "सहस्राह्न्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गं स देवानुरस्युपदध्य साक्षो सम्पश्यन् याति भुवनानि विश्वा" इति। स्वशाखायां पूर्वकाण्डे गतत्वात् सम्पूर्णो नोदाहृतः; अस्यार्थः, सहस्रमहानि किरणाः यस्य स 'सहस्राह्नः' सूर्य्यः एक ऋषिः, स च मूर्धाधिष्ठानः; तदुक्तम् प्राणाग्निहोत्रे। "तत्र सूर्य्योऽग्निर्नाम सूर्य्यमण्डलाकृतिः सहस्ररश्मिभिः परिवृत एक ऋषिर्भूत्वा मूर्ध्नि तिष्ठति" इति; तमर्हति सहस्राह्न्यं 'स्वर्गं' द्युलोकं 'पततः' गच्छतः अस्य 'हरेः' विष्णुरूपस्य 'हंसस्य' ओङ्काररूपस्य 'वियतौ' पूर्वापरावकाशभागौ अकारोकाररूपौ 'पक्षौ' पतत्रे ज्ञातव्यौ, 'स' ओङ्कारः सर्वान् देवान् सात्त्विकान् 'उरसि' हृदये सत्त्वरूपे 'उपदध्य' निधाय विश्वानि भुवनानि साक्षात् पश्यन् याति शाश्वतं ब्रह्मलोकपर्य्यन्तम्; तदारूढ़ उपासकोऽपि तद्यातीति भावः। समारूढ़स्तच्चिन्तनात्।

ओङ्कारस्य हंसरूपेणोपासनां फलञ्चोक्त्वा चतसृणां मात्राणां देवता आह, आग्नेयीति। 'एषा' मध्यमा मध्यवृत्तित्वात् उभयोः, 'वशानुगा' वशवर्त्तिनी 'उत्तरा' मकाराख्या, 'भानुमण्डलसङ्काशा' अर्थात् भानुदेवत्या 'अर्द्धमात्रा' चतुर्थी।

ततो विदित-चित्तस्तु निःशब्दं देशमास्थितः।
निःसङ्गस्तत्त्व-योगज्ञो निरपेक्षः शनैः शनैः ॥२१॥
पाशं छित्त्वा यथा हंसो निर्विशङ्कः खमुत्क्रमेत्।
छिन्नपाशस्तथा जीवः संसारं तरते तदा ॥२२॥
यथा निर्वाण-काले तु दीपो दग्ध्वा लयं व्रजेत्।
तथा सर्वाणि कर्म्माणि योगी दग्ध्वा लयं व्रजेत् २३

---

इति विपरिणामः। पुष्पादि-वासाश्रयो यथा गण्डुकं भवति, तथैयं नाडी वासनाश्रय इत्यर्थः। तर्हि किं कार्य्यम? अत आह, तामिति। चिन्तनफलमाह, तदिति। 'प्रपद्यन्ते' सम्पद्यन्ते ॥ १८—२० ॥

तत इति। विदितं चित्तं येन स विदितचित्तः। 'मात्रा-धारेण' मात्राः द्वादशादि-सङ्ख्याः प्रणवमात्राः, ता एव धारा यस्य मनःक्षुरस्य स तथा। 'तन्तुं' वासनारूपम्। द्विरुक्ति-र्निश्चयार्थः; समाप्त्यर्थ इतिशब्दः। अयमारोह-प्रकार उत्-क्रान्तिसमये खेचरीपटले उक्तः, यथा,—

"यदा तु योगिनो बुद्धिस्त्यक्तुं देहमिमं भवेत्।
तदा स्थिरासनो भूत्वा मूलाच्छक्तिं समुज्ज्वलाम् ॥
सूर्य्यकोटि-प्रतीकाशां भावयेच्चिरमात्मनः।
आपादतल-पर्य्यन्तं प्रसृतं जीवमात्मनः ॥
संहृत्य क्रमयोगेन मूलाधारपदं नयेत्।
तत्र कुण्डलिनीं शक्तिं संवर्त्तानल-सन्निभाम् ॥
जीवं निजश्चेन्द्रियाणि ग्रसन्तीं चिन्तयेद्धिया।
सम्प्राप्य कुम्भकावस्थां तड़िज्ज्वलन-भासुराम् ॥

प्राणायाम-सुतीक्ष्णेन मात्राधारेण योगवित्।
वैराग्योपल-घृष्टेन छित्त्वा तन्तुं न बध्यते ॥२४॥
अमृतत्वं समाप्नोति यदा कामात् स मुच्यते।
सर्व्वेषणा-विनिर्मुक्तश्छित्त्वा तन्तुं न बध्यते ॥
छित्त्वा तन्तुं न बध्यते ॥ २५ ॥

इति छुरिकोपनिषत् समाप्ता ॥ १३ ॥

---

मूलाधाराद् यतिर्देवि ! स्वाधिष्ठानपदं नयेत्।
तत्रस्थं जीवमखिलं ग्रसन्तीं चिन्तयेद् व्रती ॥
तड़ित्-कोटि-प्रतीकाशां तस्मादुन्नीय सत्वरम्।
मणिपूरपदं प्राप्य तत्र पूर्ववदाचरेत् ॥
तत्र स्थित्वा क्षणं देवि ! पूर्ववद् योगमार्गवित्।
अनाहतं नयेद् योगी तत्र पूर्ववदाचरेत् ॥
उन्नीय तस्माद्-भ्रूमध्ये नीरन्ध्रं ग्रसेत् पुनः।
ग्रस्तं चोरं महाशक्त्या कोटिसूर्य्य-समप्रभा ॥
मनसा सह वागीशा भित्त्वा ब्रह्मार्गलं क्षणात्।
परामृत-महाम्भोधौ विश्रान्तिं तत्र कारयेत् ॥
तत्रस्थं परमं देवं शिवं परम-कारणम्।
शक्त्या सह समायोज्य तयोरैक्यं विभावयेत्" ॥

इति ज्ञातमुत्क्रान्तिकालं वञ्चयित्वा यदि जीवितु-मिच्छेत्, तदावरोहं कुर्य्यादित्यपि तत्रोक्तम्। तद्यथा,

"यदि वञ्चितुमुद्युक्तः काले कालविभागवित्।
कालस्तु यावद् व्रजति तावत्तत्र सुखं वसेत् ॥
ब्रह्मद्वारार्गलस्याधो द्वे काले प्रयोजनम्।

# चूलिकोपनिषत् ।

## ओम् अष्टपादं शुचिहंसं त्रिसूत्रं मणिमव्ययम् ।

---

तस्मादूर्द्ध्वं पदं देयं न हि कालप्रयोजनम् ॥

यदा देव्यात्मनः कालमतिक्रान्तं प्रपश्यति ।

तदा ब्रह्मार्गलं भित्त्वा शक्तिं मूलपदं नयेत् ॥

शक्तिदेह-प्रसूतन्तु स्वजीवञ्चेन्द्रियैः सह ।

तत्तत् कर्म्मणि संयोज्य स्वस्थदेहः सुखं व्रजेत् ॥

अनेन देवि ! योगेन वञ्चयेत् कालमागतम्" ॥ इति ।

आरोहावरोहाभ्यां स एव सर्वयोग-शास्त्रेषु मुख्यो योग इति द्रष्टव्यम् । स च चुरिकायां प्रकाशितः ॥ २१—२५ ॥

नारायणेन रचिता श्रुतिमात्रालम्बिना ।

अस्पष्टपद-वाक्यानां दीपिका चुरिकाभिधे ॥

इति चुरिकोपनिषदो दीपिका सम्पूर्णा ॥ १३ ॥

---

ओं चूलिका चूलिका लोके स्तम्भाग्रं तीक्ष्णमुच्यते ।

तद्वद्वेदान्त-भागोऽयं चतुःखण्डा हि पञ्चमी ॥ १ ॥

योगफलमात्मदर्शनम्, स चात्मा अतिसन्निहितोऽपि कण्ठस्थहारवत् परागदृष्टिना गुरुं विना न दृश्यते इति तद्बोधनार्थमुत्तरो [illegible] तत्र हारकूपकेणाह, अष्टपादमिति । 'अष्टौ प्रकृतिरूपाः 'पा[illegible] अथवा अस्य तम् अष्टपादम्, तदुक्तम्,—

"भूमिरापो[illegible] [illegible] मनो बुद्धिरेव च ।

अहङ्कार [illegible] [illegible]धा" ॥ इति ।

अस्याः [illegible] [illegible]ख्यात् । 'शुचिः' उज्ज्वलं ; शुचिः शब्दः [illegible] [illegible]कम् ; शुचिमिति वा पाठः । हन्ति अज्ञानादि[illegible] [illegible] त्रीणि 'सूत्राणि' धर्म्मार्थ-कामा

द्विवर्त्तमानं तेजसेद्धं सर्वः पश्यन् न पश्यति ॥१॥
भूतसम्मोहने काले भिन्ने तमसि चैश्वरे।
अन्तः पश्यति सत्त्वस्थं निर्गुणं गुणकोटरे ॥२॥
अशक्यः सोऽन्यथा द्रष्टुं ध्येयमानः कुमारकः।
विकार-जननीं मायामष्टरूपामजां ध्रुवाम् ॥३॥

---

यस्य, मोक्षस्य स्वरूपानतिरेकात्। त्रयो गुणा वा, त्रिसूत्रं तिस्रो नाड्यो वा। 'मणिं' प्रकाशकत्वात्, न विविधमेतीति 'अव्ययम्' एकरूपं, 'द्वयोः' स्थूल-सूक्ष्म-देहयोः 'वर्त्तमानं' तिष्ठन्तं द्विवर्त्तमानं, 'तेजसा' प्रकाशेन 'इद्धं' दीप्तं तेजसेद्धं, छान्दसी वृद्धिः। एवंविधमात्मानं कण्ठस्थ-हारमिव 'सर्वः' लोकः पश्यन्नपि न पश्यति। हारोऽपि अष्टकः कण्ठिकावयवः उज्ज्वलः हंसलक्षणोपेतः त्रिवृत्सूत्रः मणिमयः दृढः 'द्वयोः' दक्षिणोत्तरभागयोर्वर्त्तमानः तेजसा दीप्तश्च भवति, सर्वो लोकः तं पश्यन्नप्यतिसान्निध्याच्च पश्यति ॥ १ ॥

तर्हि तद्दर्शने क उपायः? इत्यत आह, भूतेति। भूतमोह-जनके 'काले' कृष्णवर्णे 'ऐश्वरे' ईश्वराधिष्ठिते 'तमसि' अज्ञाने 'भिन्ने' नष्टे सति 'अन्तरेव' सन्निहितं पश्यति 'सत्त्वस्थं' बुद्धिस्थं तत्साक्षिणं तत् प्रकाश्यं वा दृश्यते त्वग्रया बुद्ध्या इति श्रुतेः। स्वयं निर्गुणमपि 'गुणकोटरे' लिङ्गे भासमानं, मेघ-मण्डले इव सूर्य्यम् ॥ २ ॥

अशक्य इति। सः 'कुमारकः' जरा-रहितः 'अन्यथा' दिव्यदृष्टिं विना प्रकारान्तरेण द्रष्टुं न शक्यः, सः 'ध्येयमानः' वाह्यदृष्ट्या चिन्त्यमानोऽपि, छान्दस एकारः। अथवा अद्यापि 'ध्येयं' चिन्तनीयं विचार्य्यं 'मानं' प्रमाणमस्य दुर्विज्ञेयत्वात्,

ध्यायतेऽध्यासिता तेन तन्यते प्रेरिता पुनः ।
सूयते पुरुषार्थश्च तेनैवाधिष्ठिता पुरा ॥ ४ ॥
गौरनादवती सा तु जनित्री भूतभाविनी ।
असिता सित-रक्ता च सर्वकामदुघा विभोः ॥५॥

---

मायां 'ध्यायते' चिन्तयति जगत् स्रष्टुं सम्भावयति, नारीमिवर्त्तुः, सा तां तदुक्तम्,—

"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत !" ॥ इति ।

तेन 'अध्यासिता' आक्रान्ता आरूढ़ा प्रेरिता च सती 'तन्यते' स्वयमेव कार्य्यरूपेण ततो भवति, कर्म्मकर्त्तरि कर्म्मवत् प्रत्ययः । तेनैवाधिष्ठिता सती पुरा 'पुरुषार्थं' भोग्यं सूयते प्रसूतवती कर्म्म-कर्त्तरि पुरि लुङ् चास्म इति भूतेऽनद्यतने लट् ॥ ४ ॥

भोग्यवस्तु-जनकत्वेन मायां ध्यात्वा रूपयति, गौरिति । इयं 'गौः' दोग्ध्री । दोग्ध्री चेत् हम्भारवं करोति न इत्याह, 'अनादवती' नादरहिता अचेतनत्वादक्तुमसमर्था ईश्वराधीनेत्यर्थः । यद्वा 'गौरी' शुक्ला सत्त्वप्रधाना सती नादवती वेदप्रवर्त्तिका, पुंवद्भावः पूर्वस्य । "गौरः शुक्लेऽरुणेऽपि च" इति विश्वः । 'असिता' तामसी, सिता चासौ रक्ता च 'सितरक्ता' सात्त्विकी राजसी चेत्यर्थः । 'विभोः' ईश्वरस्य 'सर्वकामदुघा' सर्वान् कामान् दोग्धि यथेष्ट-कार्य्यकरी । महानारायणीये श्वेताश्वतरे च अस्याश्छागीसाम्यमुक्तम्,—

"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।

पिबन्ति नाम-विषयमसङ्ख्याताः कुमारकाः।
एकस्तु पिबते देवं स्वच्छन्देन वशानुगः॥ ६ ॥
ध्यान-क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रथमं प्रभुः।
सर्वसाधारणीं दोग्ध्रीमिज्यमानां सुयज्वभिः॥ ७॥

---

अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥ इति ॥ ५ ॥

जीवानां बहुत्वं, भोक्तृत्वमीश्वरस्यैकत्वञ्चाह, पिबन्तीति। 'नाम' शब्दः 'विषयः' अर्थः, तयोः समाहारः नाम-विषयं 'पिबन्ति' भुञ्जते 'कुमारकाः' जीवाः, 'एकः' ईश्वरः 'पिबते' पाययतीत्यर्थः, तद्विधम्। "प्रयोजक-व्यापारः कर्त्रभिप्रायः क्रियाफलम्" इति कैयटः। छान्दसत्वादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदम्। 'वशाः' स्वविधेयाः 'अनुगाः' परिवारा यस्य स वशानुगः॥ ६ ॥

तर्हि किमस्य सर्वथा अभोक्तृत्वं? नेत्याह, ध्यान-क्रियाभ्यामिति। प्रथमं ध्यायति भगवानिदमिति, ततः पश्यति, सैव क्रिया, ताभ्यां स प्रथमं भुङ्क्ते तदुच्छिष्टमन्यो भुङ्क्ते, ध्यात्वावलोकनमेव तस्य भोजनं "न वै देवा अश्नन्ति, न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति श्रुतेः।

भुङ्क्ते इत्युक्तम्; कां भुङ्क्ते? तत्राह, सर्वेति। सर्वेषां 'साधारणीं' समभोग्याम् अव्याकृतरूपामित्यर्थः। "एकमस्य साधारणम्" इति श्रुतेः। दोग्ध्री तु स्वभक्षण-मपेक्षते, अन्यथा दोहासम्भवादत आह, इज्यमानामिति। 'सुयज्वभिः' साधुयाज्ञिकैः 'इज्यमानां' हव्य-कव्येन पूज्यमानाम्॥ ७ ॥

पश्यन्त्यस्यां महात्मानं सुपर्णं पिप्पलाशनम् ।
उदासीनं ध्रुवं हंसं स्नातकाध्वर्य्यवो हवेत् ॥ ८ ॥
शंसन्तमनुशंसन्ति बह्वृचाः शस्त्र-कोविदाः ।
रथन्तरे वृहत् साम्नि सप्तैवैते च गीयते ॥ ९ ॥
मन्त्रोपनिषदं ब्रह्म पदक्रम-समन्वितम् ।
पठन्ते भार्गवा ह्येतदथर्वाणो भृगूत्तमाः ॥ १० ॥

---

पश्यन्तीति। वृक्षस्थानीयमेकं देहं त्यक्त्वा देहान्तरं गच्छतीति सुपर्णोपमम्; सुपर्णं 'पिप्पलं' कर्म्मफलमश्नाति, तं पिप्पलाशनं, वस्तुवृत्त्या उदासीनं, स्नातकाध्वर्य्यवः 'हवेत्' होमात् पश्यन्तीत्यन्वयः। वहेदिति पाठे, तानियं 'वहेत्' निर्वहेत् योग-क्षेमादिनेति व्याख्येयम्। हवे इति पाठे, हवनकर्म्मणि। हयेदिति पाठे, तानियं वर्द्धयेत्। हये इति पाठे, 'हयः' अश्वः तदुपलक्षिते अश्वमेध-कर्म्मणि ॥ ८ ॥

आध्वर्य्यव-फलमुक्त्वा हौत्रफलमाह शंसन्तमिति। 'शस्त्र-कोविदाः' सपादबन्धो मन्त्रः ऋक्, तया केवलया स्तुतिः शस्त्रं, गीयमानया तया स्तुतिः स्तोत्रम्, "ऋग्भिः शंसन्ति, यजुर्भिः शंसन्ति, सामभिः शंसन्ति" इति यास्कवचनात्। शस्त्रे 'कोविदाः' कुशलाः, फलं पूर्वोक्तमेवानुसन्धेयम्।

सर्वत्र सामगानां व्यापारमाह, रथन्तरे इति। रथन्तरे गीयते वृहत्साम्नि गीयते सामगैर्दोग्ध्रीति शेषः। किं बहुना, सप्तैवैते च सामभेदा गीयन्ते इति विपरिणामः। रथन्तरं वृहत्साम, वैरूप्यं, वैराजं, महानाम्नी, रैवती, वामदेव्यम्, इति सप्त सामानि। दोग्ध्री फलं पूर्वोक्तं ददातीति शेयम् ॥९॥

अथर्वणां व्यापारमाह, मन्त्रेति। मन्त्राश्च उपनिषदश्च

ब्रह्मचारी च व्रात्यश्च स्कम्भोऽप्यपलितस्तथा।
अनड्वान् रोहितोच्छिष्टः पठ्यते भृगुविस्तरे ॥११॥
कालः प्राणश्च भगवानात्मा पुरुष एव च।
शिवो भवश्च रुद्रश्च ईश्वरः पुरुषस्तथा ॥ १२ ॥
प्रजापतिर्विराट् चैव पार्ष्णिः सलिलमेव च।
स्तूयते मन्त्रसंयुक्तैरथर्व-विहितैर्विभुः ॥ १३ ॥
तं षड्विंशकमित्येके सप्तविंशमथापरे।
पुरुषं निर्गुणं साङ्ख्यमथर्वाणः शिरो विदुः ॥१४॥
चतुर्विंशति-सङ्ख्याकमव्यक्तं व्यक्त-दर्शनम्।

मन्त्रोपनिषदम्, उपनिषदशब्दोऽकारान्तो नपुंसकमस्ति। 'ब्रह्म' ब्राह्मणम् ॥ १० ॥

भार्गव-ग्रन्थानां विषयमाह, ब्रह्मचारीत्यादि-सार्द्धद्वाभ्याम्। तर्ह्येतन्निरूपणेन भगवतो निरूपणमित्याशङ्क्याह, स्तूयते इति। 'अथर्वविहितैः' अथर्वप्रतिपाद्यैरर्थैः। 'विभुः' ईश्वरः परमात्मा, षड्विंशकं पौराणिकाः, सप्तविंशं तद्वेदा एव,

"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहङ्कृतिः।
महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः" ॥ इति।

चित्तेन साहित्ये सप्तविंश इति सङ्ख्यायते। अथर्वेति। 'सङ्ख्या' ज्ञानं, तत्सम्बन्धी साङ्ख्यः, तं ज्ञानगम्यमित्यर्थः ॥११-१४॥

चतुर्विंशति-सङ्ख्याकमिति। कपिलाः चतुर्विंशति-सङ्ख्याक-मस्तुवन्, तदुपरितनं षड्विंशकमित्यर्थः। तदुक्तम्,—

"मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त।
षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ इति।

अद्वैतं द्वैतमित्येतत्त्रिधा तं पञ्चधा तथा ॥ १५ ॥
ब्रह्माद्यं स्थावरान्तञ्च पश्यन्तो ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः ॥ १६ ॥
यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावर-जङ्गमम् ।
तस्मिन्नेव लयं यान्ति वुद्बुदाः सागरे यथा ॥ १७॥
यस्मिन् भावाः प्रलीयन्ते लीनाश्चा व्यक्ततां ययुः ।
नश्यन्ते व्यक्ततां भूयो जायन्ते वुद्बुदा इव ॥ १८ ॥
क्षेत्रज्ञाधिष्ठितञ्चैव कारणैर्व्यञ्जयेद्बुधः ।
एवं सहस्रशो देवं पर्य्यस्यन्तं पुनः पुनः ॥ १९ ॥

---

स्वयम् 'अव्यक्तम्' अप्रत्यक्ष 'व्यक्तदर्शनं' व्यक्तस्य जगतो भासकम्, अद्वैतं वेदान्तिनः, द्वैतं काणादयः, त्रिधा गुणभेदेन, पञ्चधा तु भूतभेदेन, "स एकधा भवति, त्रिधा भवति, पञ्चधा भवति, सप्तधा, नवधा, पुनश्चैकादश इति श्रुत्यन्तरात् ॥१५॥

'द्विजाः' त्रैवर्णिका वेदविदः । ब्रह्मेति ब्रह्मकार्य्यं स्थावरादि तस्मिन् प्रोतं तमेकं ब्रह्मैव पश्यन्तीत्यन्वयः । लयं यान्ति सर्वे भावाः 'लीनास्याः' लीनम् आस्यं मुखं द्वारमविद्यालक्षणं येषां ते तथोक्ताः । यस्मिन् प्रोताः सन्तो व्यक्ततां 'ययुः' गताः पुनर्नश्यन्ते नश्यन्ति भूयश्च व्यक्ततां 'जायन्ते' जनयन्ति अन्तर्भावितण्यन्तत्वात् सकर्म्मकः, गच्छन्ति वा । द्विः कथनं सृष्टिप्रलययोरभ्यास ज्ञापनार्थम् ॥ १६—१८ ॥

क्षेत्रज्ञेन अधिष्ठितं शरीरं, 'कारणैः' अनुमिति-कारणैः हेतुभिः विमतत्त्वेनाधिष्ठितं क्रियावत्त्वाद्रथादिवदित्यादिभिः 'व्यञ्जयेत्' लक्षयेत, 'बुधः' पण्डितः । एवं सहस्रशः पर्य्यस्यन्तं

य एवं श्रावयेच्छ्राद्धे ब्राह्मणो नियतव्रतः।
अक्षय्यमन्नपानञ्च पितॄणाञ्चोपतिष्ठते ॥ २० ॥
ब्रह्म ब्रह्मविधानन्तु ये विदुर्ब्राह्मणादयः।
ते लयं यान्ति तत्रैव नीलास्या ब्रह्मशायिने।
नीलास्या ब्रह्मशायिने ॥ २१ ॥

इत्यथर्ववेदे चूलिकोपनिषत् समाप्ता ॥ १४ ॥

---

## अथर्वशिखोपनिषत्।

ओं पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणं भगवन्तं पप्रच्छ।

---

तं 'देवं' पुनः पुनर्जन्म-मरणादि प्रबन्धमापद्यमानं जीवम् उक्त-योगेन उद्धरेदिति शेषः। वैराग्यार्थमिदमभिहितं लक्षयेत् चेष्टादिना सर्वशरीरेष्वनुमायादित्यर्थः ॥ २० ॥

'ब्रह्म' कूटस्थं 'ब्रह्मविधानं' तज्ज्ञानोपायम्; लीनम् 'आस्यम्' मुखं प्रवृत्तिद्वारं रागादि येषां ते तथोक्ताः। किमर्थं लीनास्याः? 'ब्रह्मशायिने' ब्रह्मणि शेते तच्छीलो ब्रह्मशायी, भावप्रधानो निर्देशः. ब्रह्मशायिन्, ब्रह्मणि शयनं कर्त्तुम् एको भवितुमित्यर्थः। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां दीपिका चूलिकाभिधे ॥
इति चूलिकोपनिषदो दीपिका सम्पूर्णा ॥ १४ ॥

---

एषाथर्वशिखा नाम शिर ऊर्द्ध्वं शिखोचिता।
द्विखण्डा सप्तमी मुण्डात् प्रणवार्थ निरूपिणी ॥ १ ॥

किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं ? किं तद्ध्यानं ? को वा ध्याता, ? कश्चिद्ध्येयः ? इति ।

अथैभ्योऽथर्वा प्रत्युवाच, ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम् ।

---

सर्वार्थसिद्धिदं शिवमाराध्य विधूत विघ्नव्रातो भगवन्महेश्वरपूजनेन विधूताखिल कल्मषो देशिकः क्षुरिकोक्त-मार्गेण साधित-यमादि-प्रत्याहारान्त योगाङ्गधारणा-पूर्वकं ध्यानपथमारुरुक्षुः सबीजयोगे मन्त्रस्याङ्गत्वात् सर्वमन्त्र-शिरोमणिं प्रणवमवयवशः स्वरूपतश्च निर्णीय ध्याने विनियोक्तुं पुनः प्रकृतं तमेवानुसन्धत्ते, पिप्पलाद इति । अत्र प्रष्टॄणां त्रित्वम् एभ्य इत्यग्रेऽनुवादादवसीयते । आख्यायिका तु विद्यास्तुत्यर्था ॥ १ ॥

प्रश्नानाह, किमादावित्यादि । 'आदौ' सर्वमन्त्रादौ सर्ववेदादौ मुख्यत्वेन च प्रयुक्तं, ध्यायते यत्तदिति व्युत्पत्त्या 'ध्यानं' ध्येयं 'ध्यायितव्यं' ध्यानार्हञ्च किमित्यर्थः । अत्र क्रान्दसश्चिद्वत् इट् । प्रथमप्रयुक्तो ध्येयश्च मन्त्रः क इति प्रथमप्रश्नार्थः । किं तद्ध्यानमिति । 'तस्य' ध्यातव्यस्य मन्त्रस्य किं ध्यानमिति द्वितीयः प्रश्नः । को वा 'ध्याता' अधिकारी इति तृतीयः । कश्च 'ध्येयः ईशः इति चतुर्थः । 'चित्' इति वितर्के, को देवो ध्येयः ? इति विचार्य वक्तव्यमित्यर्थः । इति शब्दः प्रश्नसमाप्तौ ।

आद्यस्योत्तरमाह, ओमित्येतदक्षरमिति । सर्वस्य वक्तव्यस्य मन्त्र ब्राह्मणादेर्देवता-ध्यानस्य च 'आदौ' प्रथमं प्रयुक्तम् 'आदौ' ईश्वरे वाचकत्वेन प्रतिनिधित्वेन वा प्रयुक्तमित्यर्थः ।

ओमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदाश्चत्वारः।

चतुष्पादेतदक्षरं परं ब्रह्म, पूर्वास्य मात्रा पृथिव्यकारः, स ऋग्भिरृग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः। द्वितीयान्तरिक्षमुकारः, स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुप् दक्षिणाग्निः। तृतीया द्यौर्मकारः स सामभिः सामवेदो विष्णु-रादित्या जगत्याऽवनीयः। यावसानेऽस्य चतुर्थ्य-र्द्धमात्रा, सा लुप्तमकारः, सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्त्तकोऽग्निर्मरुतो विराडेकऋषिः।

---

द्वितीयस्योत्तरमोमित्येतदक्षरस्येति। पाद-देव-वेदाश्चतुः-सङ्ख्यकाः, यथासङ्ख्यकं ध्येया इत्यर्थः। 'देवाः' उभयेऽपि अधिष्ठातारो गणदेवताश्च देव-शब्देन गृहीताः, पृथिव्यादयो लोकाः, गायत्र्यादीनि छन्दांसि च रूपाणि त्रिष्वेव सन्ति, न चतुर्थ इति पादादि पङ्क्तौ नोक्तानि; अग्नयश्चात्रोक्ताः, 'पादाश्चत्वारः' अकारादयः।

पादादीन् वक्तुं पुनश्चतुष्पात्त्वं प्रतिजानीते, चतुष्पादेतद-क्षरं परं ब्रह्मेति। ऋग्भिरुपलक्षितत्वा[illegible]दः। ब्रह्मादयो-ऽधिष्ठातारः, वस्वादयो गणदेवताः, लुप्तमकारः मकारस्य विरतत्वात्। सः अथर्वणैर्मन्त्रैर[illegible]र्ववेदः, 'संवर्त्त-कोऽग्निः' ब्रह्मादिस्थानीयो[illegible]ता, '[illegible]त.' एकोनपञ्चा-शत्सङ्ख्यका गणदेवताः। [illegible]डित्यर्थ[illegible] चतुष्का-

रुचिरा भास्वती स्वभा,

प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या। द्वितीया शुभा रौद्री रुद्रदेवत्या। तृतीया कृष्णा विष्णुमती विष्णुदेवत्या। चतुर्थी विद्युन्मती सर्व्ववर्णा पुरुषदेवत्या। स एष ह्योङ्कारश्चतुष्पादश्चतुःशिराः।

---

पाठेऽपठितत्वात्, अन्यथा पादाश्चत्वार इत्यत्र छन्दांसि चत्वारीति च पठेत्, वर्णावसानत्वाच्चार्द्धमात्रा तुर्य्या, अत्र वर्णधर्म्म-च्छन्दसोऽसम्भवात्। नारसिंहे तु विराडित्यपि पठितं, तच्च औपचारिकं छन्दस्त्वं बोध्यम्। एकऋषिर्नामाग्निः।

मूर्द्ध्न्यवस्थितायास्तु मात्राया ध्यानमाह, रुचिरेति। 'रुचिरा' रम्या 'भास्वती' दीप्तिमती 'स्वभा' अन्यनिरपेक्षप्रकाशा।

इदानीं मात्राणां वर्णानाह, प्रथमेति। रक्ता वर्णेन सृष्टिहेतुत्वेन राजसत्वात्, 'ब्राह्मी' ब्रह्मवती, अग्रे विष्णुमतीत्युक्तत्वात्। ब्रह्मा देवतापि तटस्थो भविष्यति, न सम्बद्ध इति शङ्कानिरासाय ब्राह्मीत्युक्तम्। 'शुभा' शुक्ला चन्द्रसन्निभा 'रौद्री' नित्य-सन्निहितरुद्रा, 'पुरुषः' ईश्वरः।

यद्यपि ब्रह्मविद्योपनिषदि अकारादीनां क्रमेण ब्रह्म-विष्णु-रुद्रा देवता उक्ताः, तथा तृतीया मात्रा "मकारश्चाग्नि-सङ्काशो विधूमो विद्युतोपमः" इत्युक्तम्; अत्र तु ब्रह्म-रुद्र-विष्णवो देवता उक्ताः, तथा तृतीया मात्रा च कृष्णा उक्ता इति विरोधः। तथा अथर्वशिरसि "या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन" इति देवता-वर्णविपर्य्यास उक्तः,

चतुर्थ्यर्द्धमात्रा स्थूल-ह्रस्व-दीर्घ-प्लुतः॥
ओमोमोमिति त्रिरुक्तस्तुर्थः शान्तात्मा
प्लुतप्रयोगे नसममित्यात्मज्योतिः सकृदावर्त्तव्यः।

---

तथापि वस्तुतो ब्रह्मादीनां त्रयाणामेकरूपत्वादुपासनाङ्गत्वेन फलभेदाय तत्तद्रूपापादानम्। एतेन वर्णभेदोऽपि परिहृतः, ध्यानभेदेन फलभेदात्; अतएव कालाग्निरुद्रोपनिषदि महेश्वर-सदाशिव-शिवाः शिवं प्रति प्रणव-वर्णत्रये देवा उक्ताः; आगमेषु क्वचित् सात्त्विकादिभेदेन एकस्या एव देवतायास्त्रिधा ध्यानमुक्तम् वास्तवस्थितिस्त्वत्रैव वक्ष्यति,—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते"॥ इति॥

कल्पभेदेन वा ब्रह्मादीनामुत्पत्तिक्रमे भेदः। चत्वारः 'पादाः' अकारोकार-मकारार्द्धमात्राः विश्व-तैजस-प्राज्ञ-तुरीय-लक्षणाः यस्य, स चतुष्पादः, चत्वारि 'शिरांसि' उत्तमाङ्गानि मुखस्थानीयानि अग्नयो यस्य, स चतुःशिराः। अकारादीनां पादत्वं प्राथम्यात्, सर्वधर्म्माश्रयत्वाच्च; अग्नीनां मुखत्वं "मुखादग्निरजायत" इति श्रुतेः अग्नेः सर्वदेव-मुखत्वादन्यनिर्दिष्टत्वाच्च द्रष्टव्यम्।

स्थूलं रूपं त्रिधा विभक्तं, सूक्ष्मं पृथक् करोति, चतुर्थीति। 'चतुर्थ्यर्द्धमात्रा' नादसञ्ज्ञा लुप्तमकारः। स्थूले विभागमाह, स्थूलेति। यः 'स्थूलः' वर्णकूटरूपः प्रणवः, स ह्रस्व-दीर्घ-प्लुतः, उद्देश्य-विधेययोरपि विशेषणविशेष्यत्वमात्र-विवक्षया समासः।

ह्रस्वादीनां स्वरूपमभिनीय दर्शयति, ओमोमोमिति। प्रथमः एकमात्रः, द्वितीयो द्विमात्रः, तृतीयस्त्रिमात्र इत्यर्थः।

**स एष सर्वान् प्राणान् सकृदुच्चारितमात्रः,**
**स एष मूर्द्धमुत्क्रामयतीत्योङ्कारः ॥ १ ॥**
**प्रणवः सर्वान् प्राणान् प्रणामयति नामयति**

---

नन्वेवं ह्रस्वो नास्तीति कथं ह्रस्व ओङ्कारः ? नैष दोषः, पार्षदश्रुतिरियम्, यथा तत्रभवतां नारायणीयानां सुजात एव अश्व सूनृत अध्वर्यो ओम् अद्भिः सुतमिति व्याकरणात् सिद्धे प्रयोगे तस्य ह्रस्वत्वं नास्तीत्यर्थः इति विरक्त इत्यभिनीय तस्योपसंहारः ।

चतुर्थः पादः क्व वर्त्तते ? अत आह, प्लुतप्रयोगे इति । वर्त्तते इति शेषः, तत्रैवाभिव्यक्तत्वात् ; 'नसमम्' अनुपमं रूपम्, 'द्युति' हेतोः आत्मज्योतिस्तत् । विरम्यमाण-घण्टानादाद्युपमापि न भवति, ततोऽप्यतिसूक्ष्मत्वात् । 'सकृदावर्त्त्यः' सकृदावर्त्तयितव्यः अनाहत-शब्दरूप इत्यर्थः । यदा सकृद्विभागः तदापि कुतो भवतीति चेत् ? श्रूयतां, निर्विशेषत्वात् पूर्वापरविभागे भेदकाभावात्, तथा निर्विशेषत्वात् पूर्वापरावृत्तौ भेदकाभावात् सकृदावर्त्तव्यः शब्दब्रह्मसञ्ज्ञः ।

स एष इति । वर्णित-प्रणवस्योपसंहारः । ओङ्कार शब्दस्य प्रवृत्ति-निमित्तमाह, सर्वान् प्राणानिति । 'प्राणाः' दशवायवः ; तान् समनस्कान् साग्नीन् षट्चक्र-भेदनेन सुषुम्णाद्वारेण मूर्द्धानमानयतीत्यर्थः । पुनः स एष इत्यनुवाद आदरार्थः । अनेकार्थत्वान्निपातानाम् । ओमित्यूर्द्धभावे ऊर्द्धान् प्राणान् कारयति उच्चारयितुरित्योङ्कार इति योगिभिरवश्यं ध्येय इतिभावः ।

तस्य नामान्तरमाह, प्रणव इति । प्रणवशब्द-निमित्त-

वै; तस्मात् प्रणवश्चतुर्द्धावस्थितः इति वेद-देवयोनिः, धेयाश्चेति सन्धर्त्ता सर्वेभ्यो दुःख-भयेभ्यः सन्तारयति।

तारणात्तानि सर्वाणीति विष्णुः सर्वान् जयति, ब्रह्मावृहत् सर्वकारणानि सम्प्रतिष्ठाप्य ध्यानात्।

---

माह, सर्वानिति। 'प्रणामः' नम्रतापादन, नामनं न्यग्भावापादनम्। चतुर्धा यतोऽवस्थितः, ततश्चतुर्णां वेदानां देवानाञ्च योनिः; अनेन क्रमेण पूर्वत्रापि वेदाश्चत्वारो देवाश्चत्वार इति पाठेन भवितव्यम्। साम्प्रदायिकैर्निश्चयो विधेयः।

किं तद्यानमिति यत् पृष्टं, तदुत्तरं निगमयति, धेयाश्चेति। धा धातो रूपं, धातव्याः धारणीयाः पादादयो बुद्ध्या न त्यक्तव्याः ध्यातव्या इत्यर्थः। धारणस्य फलमाह, सन्धर्त्तेति। 'सन्धर्त्ता' एष हि पादादीनां धारयिता तारयति आश्रितान्, स्वस्य किं वक्तव्यम्।

को ध्याता? इति प्रश्नं ध्यातृ-ब्रह्म विष्णु-निदर्शनेनोत्तरयति, तारणात्तानीति। 'तारणेन' आश्रितानां दुःखभयापनयनेन 'अत्तानि', अद्भक्षणे निष्ठा, छान्दसो जग्ध्यभावः, ग्रस्तानि अभिभूतानि दुःखभयानि सर्वाणि 'इति' हेतोः विष्णुः सर्वान् 'जयति' अभिभवति दैत्यादीन्। अथवा 'तारणात्' तारकत्वाद्धेतोः 'तानि' पादादीनि सर्वाणीति पूर्वोक्तप्रकारेण विष्णुर्ध्यातवानिति शेषः।

ध्यानफलमाह, सर्वान् जयतीति। अथ ब्रह्मापि 'अवृहत्' वृहत्त्वं गतवान्, कस्मात्? 'सर्वकारणानि' सर्वेन्द्रियाणि

विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तम्।

ब्रह्म-विष्णु-रुद्रेन्द्राः सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतानि, कारणं सर्वमैश्वर्यं सम्पन्नं शिवमाकाशं मध्य ध्रुवस्थम् ।

---

'सम्प्रतिष्ठाप्य' स्थिरीकृत्य ध्यानात्, विष्णु ब्रह्मणोर्ध्यानकथनेन तत्फलार्थी ध्यातित्युक्त भवति ।

कश्चिद्ध्येयः ? इति चतुर्थमुत्तरयति, विष्णुर्मनसीति । नादान्ते शक्तिद्वारा शान्ते ब्रह्मणि, प्रणवो हि पञ्चकूटात्मकः अकारोकार-मकार-विन्दु नादात्मकः, तत्र नादान्ते परमात्मस्थाने 'स्थाप्य' आराप्य 'ध्येयं' ध्यानोचितम् ईशानं मनसि विष्णुः 'प्रध्यायन्ति' प्रध्यायतीत्यर्थः । वचन व्यत्ययाऽन्येषामपि ईशस्य ध्येयत्वसूचनार्थः ।

ननु अन्यान् देवानपहाय ईशान एव किमिति ध्येयः ? अत आह, ईशा वेति । वा शब्द एवार्थः, ईशैव सर्वमिदं प्रयुक्तं नान्येन ।

ननु भवतु सर्वं प्रयुक्तं, न तु ब्रह्मादय इत्यत आह, ब्रह्मेति । 'इन्द्रः' मघवा, एते चत्वारः ईशा 'सम्प्रसूयन्ते' जन्यन्ते, 'सह-भूतानि, भूतसहितानि इन्द्रियाणि ईशा सम्प्रसूयन्ते ।

पुनः किं किमीशा प्रयुक्तम् ? अत आह, कारणमिति । 'कारणं' साधकतमम् उपायभूतं, साधकतमं सर्वमेव ईशा प्रयुक्तमित्यर्थः, स हि प्रथममुपायबोधकः, 'ऐश्वर्यं' प्रभुशक्तिः सम्पन्नम् । कार्य्यमात्र-निदर्शनाय सर्वकार्य्य-मूर्द्धन्यमाकाशमाह, शिवमिति । 'शिवं' निर्म्मलं 'मध्ये' सर्वस्यान्तः 'ध्रुवम्'

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते॥

तत्राधिकं चणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति, कृत्स्नमोङ्कारगतञ्च सर्वज्ञानयोगध्यानानां शिव एक एव ध्येयः, शिव ओङ्कारः, सर्वमन्यत् परित्यज्य एतामधीत्य द्विजो गर्भवासान्मुच्यते, गर्भवासान्मुच्यते॥ २॥

इत्यथर्वशिखोपनिषत् समाप्ता॥ १५॥

---

एकरूपेण तिष्ठति। मध्ये ध्रुवस्थम् आकाशम् ईशा प्रयुक्तं, तच्च वाय्वादीनामुपलक्षणं यद्वा सम्पन्नादि चतुष्टयं शिवस्य विशेषणं जन्यत्वशङ्कानिवृत्तये।

नादान्तग्रहणेन सूचितां प्रणवस्य पञ्चकूटतामाह, ब्रह्मेति। 'पञ्चधा' अकारादिरूपेण।

पञ्चात्मकस्य ज्ञाने फलमाह, तत्रेति। सत्राधिक्ये फलाधिक्यमिति न्यायात्। कृत्स्नमोङ्कारगतञ्चेति। 'कृत्स्नम्' ओङ्कारपादादि कर्म्म ओङ्कारगतञ्च ध्यात्वा क्रतुशतस्यापि फलमवाप्नोतीत्यनुषज्यते।

परमोपदेशमाह, सर्वमन्यत् परित्यज्येति। प्राक्तनेन सम्बध्यते। ईश एव परमो ध्येय इति चतुर्थमुत्तरमुपसंहरन् तदध्ययनफलमाह एतामिति। 'एताम्' उपनिषदम् अथर्वशिखा-सञ्ज्ञाम्। द्विज इति शूद्रनिरासः। द्विरुक्तिः समाप्त्यर्था, इति शम्।

# ब्रह्मोपनिषत् ।

ओं शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादं पप्रच्छ ।

दिव्ये ब्रह्मपुरे रम्ये सम्प्रतिष्ठिता भवन्ति कथं ? सृजन्ति ? कस्यैष महिमा बभूव ? यो ह्येष महिमा बभूव, क एषः ? ।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां दीपिकाथर्व-शिखिके ॥
इत्यथर्वशिखोपनिषदो दीपिका सम्पूर्णा ॥ १५ ॥

---

ब्रह्मोपनिषदारभ्या ब्रह्मज्ञान-प्रदायिनी ।
चतुष्खण्डा तु दशमी शमिनां हृदयङ्गमा ॥ १ ॥

इदानीं चतुरवस्थस्य चतुःस्थानस्य दस्यात्मनो ? निर्गुण-ध्यानसिद्धये स्वस्वरूपं सर्वं वक्तव्यमिति ब्रह्मोपनिषदारभ्यते, ओं शौनक इति । "ओम् अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि हृदयं कण्ठं मूर्द्धेति" । तत्र चतुष्पादं ब्रह्म विभातीति ग्रन्थो द्वितीयखण्डादौ पठितः, प्रथमखण्डादावपि केचित् पठन्ति, स पाठो नातिप्रयोजनः, अर्थसम्बन्धाभावात् । 'महाशालः' महत्यः शाला गृहा यस्य स तथा, 'अङ्गिरस' गोत्रतः अपत्यापत्यम् अवान्तरभेदोपचारात्, पिप्पलादं नामतः 'पप्रच्छ' पृष्टवान् ।

प्रश्नानाह, दिव्य इति । 'दिव्ये' वागादिदेव-निवासार्हे ब्रह्मोपलब्धिस्थाने 'ब्रह्मपुरे' शरीरे सम्प्रतिष्ठिता भवन्ति वागादयः कथम् ? इति शेषः । किमाधारा वागादयः शरीरे प्रतिष्ठिताः ? इति प्रथमः प्रश्नः । सृजन्तीत्यत्रापि कथमिति

तस्मै स होवाच ब्रह्म-विद्यां वरिष्ठां प्राणो ह्येष आत्मा, आत्मनो महिमा बभूव।

देवानामायुः, स देवानां निधनमनिधनम्।

दिव्ये ब्रह्मपुरे, विरजं निष्कलं शुभ्रमक्षरं यद् ब्रह्म विभाति, स नियच्छति।

---

सम्बध्यते, किं बलेन स्वस्वविषयेषु व्याप्रियन्ते? इत्यर्थः; एष द्वितीयः प्रश्नः। कस्यैष महिमा? बुद्ध्यादि-विस्तारो जात इति तृतीयः। यो हि एक एष प्रत्यक्ष महिमा बभूव, क एष किन्तत्त्वकः? महिम तत्त्व-प्रश्नद्वारा महत एव तत्त्वं पृष्टं वेदितव्यमिति चतुर्थः।

उत्तरमाह, तस्मै इति। 'सः' पिप्पलादयः 'ह' प्रसिद्धौ 'उवाच' परितो विचार्य्य बभाषे ब्रह्म-विद्यां, सर्वैरपि प्रश्नै-र्ब्रह्मण एव पृष्टत्वात् ब्रह्मविद्येयम्, 'वरिष्ठाम्' अतिशयवतीं; प्राणो ह्येष इति। किं भौतिकः? नेत्याह, आत्मेति। यस्मिन् देवाः प्रतिष्ठिताः, यद्बलेन च सृजन्ति, यस्यैष महिमा, यच्च महिम्नस्तत्वं स एष आत्मेत्यर्थः; सामान्येनेदं चतुर्णामप्युत्त-रम्, आत्मनः प्राणत्वं प्राणाश्रयत्वात्, अतएव तथा प्राण इति भगवत् सूत्रम्। विशेषेण तृतीयस्योत्तरमाह, आत्मन इति।

प्रथमस्य विशेषत उत्तरमाह, देवानामिति। 'देवानां' वागादीनाम् 'आयुः' जीवितम्, आत्मा को ह्येवान्यात् कः प्राण्याद्यद्येष 'आत्मा आनन्दो न स्यात्' इति श्रुतेः।

आत्मसत्तयैव तेषां सत्तालाभात्, तदेव विव्रण्वन्नाह, स इति। 'निधनं' मरणम्, 'अनिधनं' जीवनम्।

स क्वास्तीत्याशङ्क्याह, दिव्ये ब्रह्मपुरे इति। चतुर्थमुत्तर-

मधुकर-राजानं माचीकवत्। यथा माची-
केकेन तन्तुना जालं विक्षिपति, तेनापकर्षति।
तथैवैष प्राणः यदा याति संसृष्टमाकृष्य।

---

यति, विरजमित्यादि। यत् 'ब्रह्म' परमात्मा 'विभाति' प्रका-
शते तत् 'विरजं' निरवद्यतत्त्वं, 'निष्कलं' कलाविद्याकार्य्यं
प्राणादि, तद्रहितम्। निषेधमुखेनोक्त्वा विधिमुखेनाप्याह,
शुभ्रमिति, 'शुभ्रम्' उज्ज्वलं प्रकाशात्मकम् 'अक्षरम्' अश्नुते
व्याप्नोति, अश्नोतेर्वासरोऽक्षरमिति स्मृतेः।

कथं सृजन्तीत्यस्य द्वितीयस्योत्तरं, स इति। 'नियच्छति'
नियमनं करोति। नियमनं बृहदारण्यके अन्तर्यामिब्राह्मणे,
"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यः पृथिवीं यमयति, यं
पृथिवी न वेद, एष त आत्मा अन्तर्य्याम्यमृत" इत्यादि चतु-
र्विंशतिभिः पर्य्यायैर्व्याख्यातम्।

तत्र प्रत्येकं पृथिव्यादीनां नियन्तृत्वमुक्तं; अत्र तु एकधा
इत्याह, मधुकर-राजानमिति। 'मधुकराः' इन्द्रियाणि तेषां
'राजानं' तदभिमानिनं जीवं नियच्छति तेन सर्वाणि निय-
तानि इत्युक्तं भवति। समासान्तविधेरनित्यत्वादच् न कृतः।
एकस्य सर्व्वनियन्तृत्वे दृष्टान्तमाह, माचीकवदिति। मक्षि-
काभिर्जीवति 'माचीकः' ऊर्णनाभो लूताख्य-कीटविशेषः,
तद्वत्। तद्विवृणोति, यथेति। यथा माचीका, छान्दस-
मीकारस्य दीर्घत्वं, टाप् च; लूता एकेन 'तन्तुना' लाला-
रूपेण द्वारेण 'जालं' स्वकुलायं 'विक्षिपति' स्वशरीरात् वहिः
करोति, 'तेनैव' एकेन तन्तुना 'अपकर्षति' तत्स्थानादन्त-
र्नयति। वक्ष्यति,—

प्राणदेवतास्ताः सर्वा नाड्यः सुस्वपे श्येना-काशवत्, यथा खं श्येनमाश्रित्य याति स्वमाल-यमेवं सुषुप्तः।

ब्रूते, यथैवैष देवदत्तो यष्ट्यादिना ताड्य-

---

"ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि।

जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" ॥ इति।

लूतास्थानीय आत्मा, तन्तुस्थानीयः प्राणः, जालस्थानीयं वागादि। यथायं दृष्टान्तः, तथैवैष प्राणो यदा 'याति' गच्छति, तदा संसृष्टमाकृष्य गच्छति, वागादि-सङ्घातं गृहीत्वैव याति; यथोक्तम्,—"यथा सुहयः षड्विंश शङ्कून् सङ्खिदेत्, एवमितरान् प्राणान् समखिददिति"।

ननु वागाद्याकर्षणे प्राणस्य तैः कः सम्बन्धः? इति प्रश्ने, नाड़ीद्वारक इत्युत्तरिते, नाड़ीभिः प्राणस्य कः सम्बन्धः? इति शङ्का स्यात्, तामपनेतुमाह, प्राणेति। प्राणो देवता यासां ताः प्राणदेवताः 'ताः' पूर्वोक्ताः सर्वाः 'नाड्यः' सुषुम्णादयः। यातीत्युक्तम्, तत् कदा? इत्यपेक्षायामाह, सुस्वपे इति। सुतरां स्वपनं 'सुस्वपः' सुषुप्तिः, तत्र सुषुप्तिकाले यातीत्यर्थः;। एतत् मरण मूर्च्छादेरप्युपलक्षणम्। क्व यातीति प्रश्ने स्वालयं यातीत्युत्तरम्; तत्र दृष्टान्तः, श्येनाकाशवदिति। विवरणं यथेति। श्येनो यथा 'खम्' आकाशमाश्रित्य स्वालयं याति, तथा सुषुप्तः 'स्वालयं' ब्रह्म याति।

कथं ज्ञायते स्वालयं ब्रह्म याति, न यत्र कुत्रचित्? इति पृष्टे उत्तरमाह, ब्रूते इति। उत्थितः सन् सुखमहमस्वाप्समिति

मानो न यति, एवमिष्टापूर्त्तैः शुभाशुभैर्न लिप्यते।
यथा कुमारो निष्काम आनन्दमुपयाति,
तथैवैष देवदत्तः स्वप्ने आनन्दमभियाति।
वेद एव परं ज्योतिर्ज्योतिष्कामो ज्योतिरानन्दयते॥

---

लोकान् वदति; तेन आनन्दं स्वालयं गतः, आनन्दाच्चागत इति ज्ञायते, आनन्दश्च ब्रह्म।

ननु शुभाशुभेषु कर्म्मसु सत्सु कथमानन्दानुभवः सुषुप्तेऽपि स्यात्? इत्याशङ्क्य शुभाशुभाभावं प्रतिपादयितुं दृष्टान्तमाह, यथैवैष इति। यथैव एष देवदत्तः 'यष्ठ्यादिना' काष्ठेनापि ताड्यमानो 'न यति' न याति, छान्दसो ह्रस्वः, न गच्छति न पलायते, सुषुप्ते तत् कस्य हेतोः? इतरानुभवाभावादित्येव तदपि, कुतः? कारणाधर्म्माभावादेव एवमनेन निदर्शनेन 'इष्टापूर्त्तैः' इष्टापूर्त्तयोः कर्त्ता तत्फलैर्न लिप्यते।

ननु यथा सुषुप्ते दुःखहेतुरधर्म्मो नास्ति, तथा सुखहेतु-धर्म्मोऽपि नास्ति; तत् कुत आनन्दानुभवः? इत्याशङ्क्य, यद्यपि धर्म्म-हेतुक आनन्दो नास्ति, तथापि नित्यानन्दो वर्त्तते, सोऽनुभूयते इत्युत्तरिते, किं तत्र प्रमाणम्? इति पृष्टे अनुभवं प्रमाणयति, यथेति। ननु तथापि क्रीड़नकादि-निमित्त आनन्दो भविष्यतीत्यत आह, निष्काम इति। तदुक्तम्,—

"द्वावेव चिन्तयामुक्तौ परमानन्द-सम्प्लुतौ।
यो विमुग्धो जड़ो बालो यो गुणेभ्यः परङ्गतः"॥ इति।

'स्वप्ने' सुषुप्ते।

नन्वानन्दः सुखं, तत् सुषुप्तौ ज्ञानाभावेन कथं भासते?

भूयस्तेनैव स्वप्नाय गच्छति जलौकावत्। यथा जलौका अग्रमग्रं नयत्यात्मानं नयति परं सन्धय यत् परं नापरं त्यजति, स जाग्रदभिधीयते।

---

अत आह वेद एवेति। वेत्तीति 'वेदः' जानात्येवेत्यर्थः, यतः 'परं ज्योतिः' परं साधन-निरपेक्षम् आत्मज्योतिः, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादिति श्रुतेः।

ननु यद्यपि वेदस्तथापि निष्कामः कथमानन्दं पश्येदत आह, ज्योतिष्काम इति। आत्मनस्तु कामाय सर्वं प्रियं भवति इति श्रुतेरात्मनो नित्यकामत्वात् ज्योतिष्कामः सन् आत्मरूपं ज्योतिः 'आनन्दयते' आनन्दरूपमनुभवति सुषुप्तावन्यकामाभावे परिशेषसिद्धमात्मकामत्वं विमलतः सकामः पुरुषत्वाज्जाग्रत् पुरुषवंत्, न च परमात्मनि व्यभिचारः पक्षतुल्यत्वात्, आप्तकाम आत्मकाम इति श्रुतेः यथास्यात्मनः सकामत्वम्।

इदानीं स्वप्नावस्थामाह, भूय इति। 'तेनेव' येन यथा सुषुप्तिं गतः तेनैव यथावृत्य 'स्वप्नाय' स्वप्नं प्राप्तुं गच्छति।

जलौकावदिति। 'जलौका' तृणस्थ-कीटविशेषः। दृष्टान्तं विवृणोति, यथेति। सा यथा 'अग्रं' पादाग्रम् 'अग्रं' तृणं पादाग्रदेशं 'नयति' प्रापयति पादाभ्यां गृह्णाति, गृहीत्वा तत्र 'आत्मानं' देहं नयति, स्वयं गच्छति तत्रेत्यर्थः। किं कृत्वा ? 'परं सन्धय' परम् अग्रे वर्त्तमानं तृणादिकं सन्धाय अभिप्रेत्येत्यर्थः, छान्दसं धातोर्ह्रस्वत्वम्। अयमर्थः, सा यथा उत्तरं गृहीत्वैव पूर्वं त्यजति, एवमयं स्वप्नदेहाद्यालम्बेरव पूर्वावस्थां

**यथैवैष कपालाष्टकं सन्नयति, तमेव स्तन इव लम्बते, वेद-देवयोनिः।**

**यत्र जाग्रति शुभाशुभं निरुक्तम् अस्य**

---

सुषुप्त्यादिरूपां त्यजति, जाग्रदाद्यालम्ब्यैव स्वप्नादि त्यजति, एवं मरणे देहान्तरमालम्ब्यैव पूर्वं देहं त्यजति। तदुक्तम्,—

"यथा तृण-जलौकैवं देही कर्म्मानुगो वशः" इति। तथा, "यथा तृणजलायुका तृणस्यान्तं गत्वा" इत्यादि श्रुतिश्च।

इदानीं जाग्रत् स्थानमाह, यत्परमिति। यत् 'परम्' उत्तरम् 'अपरं' पूर्वं न त्यजति, अवस्थात्रितयानुगतं यत्र पश्यति, स जाग्रदभिधीयते। जाग्रति हि स्वप्न-सुषुप्त्योरप्यनुसन्धानं भवति। यद्वा, 'यत्' यत्र 'परं' धर्मम् 'अपरम्' अधर्मं न त्यजति, शुभाशुभाधिकारी भवति, स जाग्रत्। स्वप्ने तु कृतं शुभाशुभं न फलति।

नन्वेकस्यानेकावस्थाश्रयत्वं कथम्? इत्याशङ्क्य दृष्टान्तमाह, यथैवेष इति। 'एषः' देवदत्तादिः यथा अष्टौ कपालानि 'सन्नयति' समकालं वहति, तथा एकोऽप्यात्मा अनेकावस्था वहतीत्यर्थः।

ननु सङ्कोच-विकाशात्मकमवस्थात्रयं कथमेकरूपे आत्मनि? इत्याशङ्क्य दृष्टान्तेन साधयति, तमेवेति। 'तमेव' आत्मानम् आविर्भाव-तिरोभाव-स्वभावमप्यवस्थात्रयं 'लम्बते' श्रयति, स्तन इव सङ्कोच विकाशात्मकः एकरूपां स्त्रियम्, स जाग्रदेव 'वेददेव-योनिः' वेदयोनिः देवयोनिश्च।

कथं ज्ञायते जाग्रदेव वेद-देव-योनिः, न स्वप्नादिरिति, तत्राह, यत्रेति। यत्र जाग्रति पदस्थाने अस्य देवस्य शुभा-

देवस्य, सम्प्रसारोऽन्तर्यामी, खग: कर्कटक: पुष्कर: पुरुष: प्राणो हिंसा परापरं ब्रह्मात्मा देवता वेदयति।

य एवं वेद, स परं ब्रह्मधाम क्षेत्रज्ञमुपैति, स परं ब्रह्मधाम क्षेत्रज्ञमुपैति ॥ १ ॥

अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति, नाभि, हृदयं, कण्ठं, मूर्द्धेति।

---

शुभं 'निरुक्तं' नितरामुक्तं शुभाशुभफलञ्च वेद देवाधीनं ; तेन ते जाग्रदुत्पन्ना इति भाव:। नितरामुक्तमित्युक्तत्वात् स्वप्नेऽपि कियानपि फलसम्बन्धो भवतीति लक्ष्यते ; अतएव स्वप्ननिमित्तरेतस्खलनादौ प्रायश्चित्त-स्मरणं शास्त्रे। स देव: 'सम्प्रसार:' सम्यक् प्रसारोऽस्मात् लोकस्येति। 'अन्तर्य्यामी' अन्त:स्थितो नियच्छति वागादीन्। अयं संयच्छतीत्यस्य उपसंहार:। खगो देशान्तरस्थ-वस्तुग्राहित्वात् ; 'कर्कट:' जलचरप्राणिभेद: स एव कामितया वक्रगतिमत्त्वात् कर्कटक: ; 'पुष्कर:' पुष्टिकर: ; यद्वा 'पुष्करं' गगनं तद्वत् स्वच्छ: ; 'पुरुष:' पुरि देहे वसति ; 'प्राण:' प्राणकर्त्ता, तेन प्राण इत्युच्यते ; 'हिंसा' हिंसको हिंस्र: 'परापरं' परं कारणम्, अपरं कार्य्यं, सगुण-निर्गुण-भेदेन वा स एव ब्रह्मा। तर्हि किं देहिनो भिन्नं ? नेत्याह, आत्मेति। 'आत्मा' प्रत्यक्, तेन ब्रह्मात्मनोरभेद इत्यर्थ:। सा देवता वेदयति सर्वचेतनत्वात् नान्योऽतोऽस्ति द्रष्टेति श्रुते:।

फलम[illegible], य एवमिति। 'धाम' [illegible]धारं प्रकाशात्मकं वा, 'क्षेत्रज्ञं' साक्षिणम् 'उपैति' [illegible] [illegible]तिपद्यते।

तत्र चतुष्पादं ब्रह्म विभाति, ।

जागरितं, स्वप्नं सुषुप्तं, तुरीयमिति । जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्ते रुद्रः, तुरीये परमक्षरम्, स आदित्यश्च विष्णुश्चेश्वरश्च, स पुरुषः स प्राणः स जीवः सोऽग्निः सेश्वरश्च जाग्रत्; तेषां मध्ये यत् परं ब्रह्म विभाति ।

---

'पुरुषस्य' उक्तलक्षणस्य स्थानानि, तत्र ध्याने सति शीघ्रमभिव्यक्तेः । 'नाभि' मणिपूरचक्रं, 'हृदयम्' अनाहतं, 'कण्ठ' कण्ठः विशुद्धिचक्रं, 'मूर्द्धा' आज्ञाचक्रम् । आधाराद्यनेक ध्यानस्थानसत्त्वेऽपि प्राशस्त्यर्थं चतुर्णां ग्रहणम्, यदुक्तम्,—

"आधारे प्रथमे चक्रे द्रुतकाञ्चन-सन्निभे ।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखी भवेत् ॥
स्वाधिष्ठाने शुभे चक्रे, सन्माणिक्य-शिखोपमे ।
नासाग्रदृष्टिरात्मानं ध्यात्वा योगी सुखी भवेत्" ॥ इत्यादि ।

ननु किमेतावन्त्येव स्थानानि निर्दिश्यन्ते नाधारादीनि ? इत्यत आह, तत्रेति । 'तत्र' तेषु स्थानेषु 'विभाति' विशेषेण भाति, अल्पध्यानेन प्रकाशते ।

के पादाः ? इत्यत आह, जागरितमिति । एषां पादत्वं पर्य्याय-व्याप्तत्वात्, आरोपितत्वेनानुत्तमाङ्गत्वात्, प्रवृत्तेस्तदधीनत्वाच्च । 'सः' चतुरवस्थः आत्मा आदित्यादिः, सेश्वरश्चेति स ईश्वरश्च । 'जाग्रत्' इति ब्रह्मणो विशेषणं देदीप्यमानमित्यर्थः । 'तेषां' जाग्रदादीनाम् ।

स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितम्; न तत्र लोका न लोकाः, देवा न देवाः, वेदा न वेदाः, यज्ञा न यज्ञाः, माता न माता, पिता न पिता, स्नुषा न स्नुषा, चाण्डालो न चाण्डालः, पौल्कसो न पौल्कसः, श्रमणो न श्रमणः, पशवो न पशवः, तापसो न तापसः, इत्येकमेव परं ब्रह्म विभाति।

हृद्याकाशे तद्विज्ञानमाकाशं तत् शुषिरमाकाशं तद्वेद्यं हृद्याकाशं, तस्मिन्निदञ्च विचरति, यस्मिन्निदं सर्वमोतं प्रोतम्।

---

तस्य स्वरूपमाह, स्वयमिति। ज्योतिर्वर्जितं, किन्तु इन्द्रियादि-रहितमपि ज्योतीरूपमेव; 'स्नुषा' पुत्रवधूः, शूद्राद् ब्राह्मण्यां जातश्चाण्डालः। पौल्कस इति, निषादाच्छूद्रायां जातः 'पुल्कसः' भिल्लः, स एव पौल्कसः। श्रमण इति, सोऽपि-नीचजातिभेदः,

"श्रमणा जातिभेदे च श्रमणो निन्द्यजीविनि"। इति विश्वः।

क भाति? किंरूपञ्च ब्रह्म? इत्यत आह, हृदीति। 'विज्ञानं' चिद्रूपम्, आकाशं स्वस्थं 'तत्' ब्रह्म। उभयोराकाशयोरविशेषमाशङ्क्य क्रमेण द्वयोर्लक्षणे आह, तत् शुषिरमिति।

मन्त्रेऽप्युक्तं—

"हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्"। इति।

स्वं विभोः प्रजाः संविज्ञायेरन् ।

न तत्र देवा लोका ऋषयः पितर ईशते,
प्रतिबुद्धः सर्वविदिति ।

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत् सूत्रञ्च यन्महत् ॥

हृदि चैतन्ये तिष्ठति ।

---

एतज्ज्ञानस्य फलं सर्वज्ञतामाह, स्वं विभोरिति । विभोः प्रजाः सम्यक् ज्ञायेरन्, यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीत्यर्थः ; यच्छान्दोग्ये, "स यदि पितृलोक-कामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति, तेन पितृलोकेन सम्पन्नो महीयते" इत्यादि ।

फलान्तरमाह, न तत्रेति । 'तत्र' ज्ञानिनि देवा ऋषयः पितरश्च न ईशते, ऋणत्रयातीतो भवतीत्यर्थः । प्रतिबुद्धो यः, सः 'सर्ववित्' सर्वमात्मत्वेन बुद्धवान् । न ह्यात्मन एव भयं भवतीति हेतोः ।

विदित-वेदितव्यस्य सन्न्यासं विवक्षुर्बाह्यदेव-पूजादित्यागः साहसमित्याशङ्क्यान्तरेव सर्वमस्तीति प्रतिपादयति मन्त्रः, हृदिस्था इति । 'देवताः' ब्रह्मादयः, इन्द्रियाधिष्ठातारश्च, 'प्राणाः' वागादयः, 'प्राणः' मुख्यप्राणः 'ज्योतिः' विषयप्रकाशः ।

शुद्धं ब्रह्म च सर्वमूलभूतमव्यक्तमपि हृद्येवास्तीत्याह, त्रिवृदिति । सत्त्व-रजस्तमसां परस्परसङ्करेण नवगुणमव्यक्तं 'त्रिवृत्' सर्वकर्माङ्गं बाह्यं नवतन्तुकञ्च सूत्रं, प्रकृतिश्च तन्तवः, 'महत्' अव्याकृतं निष्पन्नमुपवीतम् ।

हृदि प्राणश्चेति मन्त्रस्थं हृदीति पदं व्याचष्टे, हृदि चैतन्ये तिष्ठतीति

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥
सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत्॥
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम्।
तत् सूत्रं विदितं येन स विप्रो वेदपारगः॥

---

स्थूलोपवीतस्य वाचकं परिधानमन्त्रमाह, यज्ञेति। यत् हृदि चैतन्ये तिष्ठति यज्ञोपवीतं, तत् प्रतिमुञ्चेति योज्यम्। यस्मादेवं हृदि चैतन्ये तिष्ठति यज्ञोपवीतं, तस्मात् हृदयस्योपरि बहिर्विधार्य्यमाणं त्रैवर्णिकैरिदं यज्ञोपवीतं यज्ञोपवीतस्थानत्वात् त्रिवृत् कायमादिसूत्रवत्त्वं वीर्य्यवत्तु कर्म्मकारणम्, 'अस्तु' भूयात्, 'तेजः' ब्रह्म-वर्चसादि, उभयं भूयादिति पुरोधे। 'यज्ञस्य' विष्णोः परमात्मानं 'उप' सामीप्येन 'वीतं' विविधभागं तं जीवस्वरूपं 'परम्' उत्कृष्टं 'पवित्र' सर्वपवित्रभूतं 'प्रजापतेः' प्रजानां पालयितुः 'यत्' सिद्धं सर्वव्यवहार-कारणं 'सहजं' स्वभावभूतम्, अथवा देहेन्द्रियादिभिः सहोत्पन्नं 'पुरस्तात्' पूर्वम् आयुष्करम् 'अग्र्य' श्रेष्ठं 'प्रतिमुञ्च' सर्वतोऽविद्याविमोक्षणं कुरु, 'शुभ्रम्' उज्ज्वलं कृत्वा दिविमुक्तमित्यर्थः, 'परिमुञ्च' परिधेहि शिष्यबलप्रदं 'तेजः' तेजःप्रदञ्च अस्तु तव इति मन्त्रार्थः। अयं मन्त्रोऽपि हृदि चैतन्ये तिष्ठतीत्यन्वयः।

कर्म्माङ्गभूत-तदुपवीतत्यागेन सन्न्यासयोगमाह, सशिखमिति। 'बहिःसूत्र' बाह्योपवीतं 'बुधः' विप्रः तस्यैवाधि-

तेन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत् सूत्रं धारयेद्योगी योगवित्तत्त्व-दर्शिवान् ॥
वहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः ॥
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञान-शिखिनो ज्ञाननिष्ठा ज्ञान-यज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम् ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥
कर्म्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैः सन्धार्य्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

---

कारात् । सूचनादिति, 'सूच्यते' वेदान्तैर्निरूप्यते तत् सूत्रम् । नोच्छिष्ट इति एतन्मूलनाम्न दोषेण मस्करीति स्मृतिः ।

ध्यानाभ्यासं विधातुं वीतरागाणां कर्म्मण्यनधिकारात् सरागाणामेव तदित्याह, कर्म्मणीति । ये 'ब्राह्मणादयः' त्रयः कर्म्मण्यधिकृताः, ते सरागाः, तैरेव वहिःसूत्रं सम्यक् धार्य्यं न निवृत्तैः । 'हि' यस्मात् तत् कर्म्माङ्गं स्मृतम्, अङ्गि-निवृत्तौ अङ्गस्याप्रयोजनत्वात् ।

शिखा ज्ञानमयी यस्य उपवीतञ्च तन्मयम्।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः॥
इदं यज्ञोपवीतन्तु परमं यत्-परायणम्।
स विद्वान् यज्ञोपवीती स्यात् स यज्ञः स च यज्ञवित्॥
एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्व-भूतान्तरात्मा।
कर्म्माध्यक्षः सर्व-भूताधिवासः
साक्षी चेता केवलो निर्गुणश्च॥ १॥

---

निवृत्तस्य शिखा-सूत्रादित्यागे प्रत्यवायाभावं वक्तुं तयो-रूपकमाह, शिखेति। 'ब्रह्मविदः' वेदविदः।

बाह्योपवीतिभ्यो ज्ञानोपवीतिनो विशेषमाह, इदमिति। 'इदं' ज्ञानाख्यं यज्ञोपवीतं 'यज्ञः' विष्णुः आत्मा, तस्य 'उप-वीतं' वेष्टकं तदाकारमिति यावत्, तत् पवित्रं बाह्यापेक्षया, तच्च 'यत् परायणं' यस्य परमयनं सः विद्वान् 'स यज्ञः' स विष्णुः।

यल्लाभेन विविधबन्धो निवृत्तः; यत्प्रसादाद्दिव्यं चक्षुरासम्, मृत्युमुखाच्च निष्क्रान्तिः, तं श्रेष्ठतमं मन्त्राभ्यां स्तौति, एक इति। एकस्य सतो नानाभूतेषु स्थितिरलौकिको धर्मः। न च सत्त्वादौ दृष्टत्वात् लौकिक इति वाच्यम्, तत्स्वरूपातिरिक्तस्य सत्त्वादेरनभ्युपगमात्। 'सर्वव्यापी' एकस्य सतः सर्वव्याप्ति-रित्यद्भुतम्, 'सर्वभूतान्तरात्मा' एकस्य सर्वभूतान्तरत्वे दृष्टान्तो नास्ति, 'कर्माध्यक्षः' तत्फलदाता, 'सर्वभूताधिवासः' सर्वावस्थास्वाश्रयत्वाव्यभिचारात्, 'साक्षी' साक्षाद्दीक्षते,

एको मनीषी निष्क्रियाणां बहूना-
मेकं सततं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीराः
तेषां शान्तिः शाश्वती नेतरेषाम् ॥ २ ॥

आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्यान-निर्मथनाभ्यासाद्देवं पश्येन्निगूढ़वत् ॥

तिलेषु तैलं दधनीव सर्पिः
आपः स्रोतःस्वरणीषु चाग्निः ।
एवमात्मात्मनि गृह्यतेऽसौ
सत्येनैनं तपसा येऽनुपश्यन्ति धीराः ॥

---

न त्विन्द्रियादिव्यवधानेन । चेता इति, चितेरणिच्, चेतयितेत्यर्थः । अथवा, पृथिव्यादि-सञ्चयनकर्त्ता, 'केवलः' सजातीय भेदशून्यः, 'निर्गुणः' अद्वितीयत्वात् ॥ १ ॥

'एको मनीषी' असाधारणः पण्डितः, अनेन ज्ञानशक्तिरुक्ता । निष्क्रियाणां बहूनां मध्ये 'एकः' क्रियावान् ; निर्धारणस्य स्वजातीयापेक्षत्वात् । अनेन क्रियाशक्तिरुक्ता । 'एकम्' आत्मानं सततं यो बहुधा करोति मायित्वात्, 'आत्मस्थं' बुद्धिस्थं. 'धीराः' धीमन्तः 'शाश्वती शान्तिः' मोक्षः, न 'इतरेषाम्' उक्तसाधन-रहितानाम् ॥ २ ॥

आत्मानं बुद्धिं, निगूढ़वत् जलूकानिक्षिप्तेन तुल्यं स्थितं देवं 'पश्येत्' साक्षात् कुर्य्यात् ।

'आत्मा' ईशः 'आत्मनि' बुद्धौ 'सत्येन' वाग्नियमेन 'तपसा' शरीरनियमेन ।

ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि ।
जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥
पद्मकोश-प्रतीकाशं शुषिरञ्चाप्यधोमुखम् ।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥
नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं विनिर्द्दिशेत् ।
सुषुप्तं हृदयस्थन्तु तुरीयं मूर्ध्नि संस्थितम् ॥
यदात्मा प्रज्ञयात्मानं सन्धत्ते परमात्मनि ।

---

'जाग्रत्' जीवः यथा स्वप्नदशां गच्छति, तथा पुनः स्वप्ना-दागच्छते जाग्रद्दशां गच्छति ।

हृदये ध्येयत्वात् हृदयलक्षणमाह, पद्मेति । मुखे 'शुषिः' विलम् अस्यास्ति तत् 'अधोमुखं' कदलीकोषवत् 'हृदयं' मांसमयं पद्मं तज्ज्ञेयं तदेव 'विश्वस्यायतनं' सर्वस्य स्थानम् । ननु कथं सूक्ष्मे विश्वं मातीत्यत आह, महदिति ।

ननु विरोधः, अतएव केचित् शून्यं तत्त्वं प्रतिपन्नाः, अपरे ज्ञानस्यैवान्तरत्वात् साकारं ज्ञानम्, अनिर्वचनीयं विश्व-मित्याचार्य्याः, वटवीजन्यायमपरे, वस्तुतस्त्वन्त्वेको देव एव ज्ञातुमर्हतीति, अनुभवस्तु हृद्येव वस्तुमात्रस्यास्ति वहिःस्थ-मप्यन्तरेव भाति, अन्तः शून्यानां न किञ्चिद्भाति ; अतोऽनु-भवाद् गृहीतया श्रुत्या हृदयस्य महत्त्वं सिद्धम् ।

अवस्थाविशेषे पुंसः स्थानभेदमाह, नेत्रस्थमिति । हृदयस्थ मिति । पुरीतति स्थितं तुरीयमिति । यदुक्तम्,—

"मनसा सह वागीशां भित्त्वा ब्रह्मार्गलं क्षणात् ।
परामृत-महाम्भोधौ विश्रान्तिं तत्र कारयेत्" ॥ इति ।

तेन सन्ध्याध्यानमेव, तस्मात् सन्ध्याभिवन्दनम् ॥
निरोदका ध्यानसन्ध्या वाक्-काय-क्लेशवर्जिता ।
सन्धिनी सर्वभूतानां सा सन्ध्या ह्येकदण्डिनाम् ॥
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
आनन्दमेतज्जीवस्य यं ज्ञात्वा मुच्यते बुधः ॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्या-तपोमूलं तद्ब्रह्मोपनिषत् परम् ॥
सर्वात्मैकत्व-सारेण तद्ब्रह्मोपनिषत् परम् ।
तद्ब्रह्मोपनिषत् परम् ॥

तृतीयः खण्डः ॥ ३ ॥

इत्यथर्ववेदे ब्रह्मोपनिषत् समाप्ता ॥ १६ ॥

---

तद्ध्यानमेव सन्ध्येत्याह, यदेति । 'निरोदका' निर्गतमाम-मन्तादुदकं यस्याः सा, तथा 'सन्धिनी' एकत्वबोधिका,

'आनन्दम्' आनन्दः 'एतत्' एषः ; 'यम्' आनन्दं ज्ञात्वा मुच्यते । यमित्यस्य विशेषणद्वयं सर्वेति ।

इदानीमेतद् ग्रन्थस्य नाम निर्वक्ति, आत्मेति । ब्रह्म आत्मा यस्य उपनिषत् विद्या, सैव तपः, "यस्य ज्ञानमयं तपः" इति श्रुतेः, तस्य 'मूलं' परं कारणम्, अयं ग्रन्थ इत्युपचारात् ग्रन्थोऽपि ब्रह्मोपनिषदित्यर्थः । तदस्याभिरुत्यन्तरमाह, सर्वेति । सर्वं ब्रह्मेत्युपनिषद्रहस्य-ज्ञानं यस्याः सा ब्रह्मोपनिषदित्यर्थः । द्विरुक्तिः समाप्त्यर्था, इति शब्दश्च तद्द्योतकः ।

# प्राणाग्निहोत्रोपनिषत् ।

ओम् अथातः सर्वोपनिषत्सारं संसारज्ञानमधीतमन्नसूत्रं शारीरयज्ञं व्याख्यास्यामः ।

अस्मिन्नेव पुरुषशरीरे विनाप्यग्निहोत्रेण, विनापि साङ्ख्ययोगेन संसार-विमुक्तिर्भवतीति स्वेन विधिना अन्नं भूमौ निक्षिप्य, या ओषधयः सोमराज्ञीरिति तिसृभिः, अन्नपत इति द्वाभ्यामनुमन्त्रयते ।

---

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां ब्रह्मोपनिषद्दीपिका ॥
इति ब्रह्मोपनिषदो दीपिका सम्पूर्णा ॥ १६ ॥

---

प्राणाग्निहोत्रोपनिषत् चतुःखण्ड-विराजिता ।
एकादशी शौनकीये सारभूता हि सर्वतः ॥ १ ॥

ननु विरक्तस्यापि देहस्थितये अन्नादनमावश्यकं, तच्च मुक्तावनुपयुक्तत्वादनर्थकं स्यादित्याशङ्क्य उपासनया सार्थकत्वाय अग्निहोत्रोपनिषदारभ्यते, अथात इति । 'संसारज्ञानं' संसारो हे[illegible]तया ज्ञायतेऽनेनेति, अधीतं वेदेषु, अन्नमेव 'सूत्रं' साधनं यस्मिन्, 'शारीरयज्ञं' शरीरे भवं यज्ञम् ।

प्ररोचनार्थमादौ फलमाह, अस्मिन्[illegible] । 'स्वेन' स्वगृह्योक्तेन, अन्नं भूमाविति न त्वन्त[illegible] यदादावन्नपात्रमारोप्यमित्यर्थः । यद्वा व्याहृतिभिर्वा त्रयं भूमौ दत्त्वेत्यर्थः ।

या ओषधयः सोमराज्ञीर्वह्वीः शतविलक्षणाः ।
बृहस्पति-प्रसूतास्ता नो मुञ्चन्त्वंहसः ॥
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पति-प्रसूतास्ता नो मुञ्चन्त्वंहसः ॥
जीवलां नघारिषां मा ते बध्नाम्योषधे ! ।
यातयापुरुपहरादप रक्षांसि चातयात् ॥
अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।
प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

---

सोमराज्ञीति । सोमो राजा यासां ताः सोमराज्य इत्यर्थः, ताः 'नः' अस्मान् 'अंहसः' पापात् मुञ्चन्तु इत्यन्वयः । 'शतम्' अनेकजातीयाः, 'विलक्षणाः' रोगाद्यपनयनाः । तयोः कर्म्मधारयः । बृहस्पतिना 'प्रसूताः' दर्शितवीर्य्याः ।

'जीवलां' जीवं लाति आदत्ते सा विषौषधिरित्यर्थः, तां 'नघारिषां' हर्षाजननीम् उद्वेग-कारिणीं, यथा लाङ्गली गृहोपरि निक्षिप्ता कलहं करोति कुटुम्बिनां, तादृशीं ; हे 'ओषधे' ! हे वनभवे ! 'ते' तव त्वत्सम्बन्धिनीं त्वत्स्वामिकां तां 'मा बध्नामि' न स्वीयां करोमि । 'उपहरात्' उपहरेत, रक्षांसि च अप 'आतयात्' आयात् आगतानि कुर्य्यात्, तां मा बध्नामीत्यन्वयः ।

'अनमीवस्य' न अमीवं पापं यस्य, 'शुष्मिणः' तेजस्विनः । "शुष्मं तेजोऽर्कयोरुक्तम्" इति विश्वः । 'प्रप्रदातारं' "प्रसमुपोदः पादपूरणे" इति प्रशब्दस्य द्विर्भावः । 'तारिषः' तारय ऊर्द्ध्वं लोकं नय, 'ऊर्जम्' अन्नं बलं वा 'नः' अस्मभ्यं 'धेहि' देहि

ओं यदन्नमग्निर्बहुधा विराद्धि
रुद्रैः प्रजग्धं यदि वा पिशाचैः।
सर्वं तदीशानो अभयं कृणोतु शिवमीशानाय स्वाहा॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।
त्वं यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्त्वं विष्णुस्त्वं वषट्कारः॥
आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों नमः।
आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्॥
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो असताञ्च प्रतिग्रहम्॥

---

"डुधाञ्लि धारणे पुष्टौ दाने" इति वोपदेवः। 'द्विपदे' मनुष्याय।

'विराद्धि' सिद्धिविरोधि विराद्धेरवाह, रुद्रैरिति। रुद्र-पिशाचादिभ्यो यजमानेनार्पितमित्यर्थः, सर्वं 'तत्' अन्नम् 'ईशानः' परमात्मा 'अभयं' भयाजनकं 'कृणोतु' करोतु, तद-र्थम् ईशानाय स्वाहा, आहुतिं ददामीत्यर्थः।

जठराग्नेः प्रार्थना, अन्तरिति।

अपां प्रार्थना, आपो ज्योतिरित्यादि। हे आपः! यूयं 'ज्योतिः' आदिरूपाः स्थ, ताभ्यः ओं नम इत्यन्वयः।

आपः पुनन्त्विति तासामेवापरो मन्त्रः। पूता सती मां पुनातु। 'ब्रह्मणस्पतिः' ब्रह्मणस्पतयः पृथिवीं पुनन्तु, 'ब्रह्म-पूता' ब्रह्मभिः ब्राह्मणैः पवित्रिता पृथिवी मां पुनातु। मम उच्छिष्टादि सर्वं तदापः 'पुनन्तु' शोधयन्तु इत्यन्वयः।

आपोऽमृतमस्यमृतोपस्तरणमस्यमृतञ्च प्राणे जुहोमि, अमा शिष्यान्तोऽसि प्राणाय प्राधानाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, इति कनिष्ठयाङ्गुल्या अङ्गुष्ठेन च प्राणे जुहोमि, अनामिकया अपाने, मध्यमया व्याने, प्रदेशिन्या समाने, सर्वाभिरुदाने, तूष्णीमेकामेकऋषौ जुहोति। द्वे आहवनीये एकां दक्षिणाग्नावेकां गार्हपत्ये एकां सर्वप्रायश्चित्तीये।

प्रथमः खण्डः ॥ १ ॥

अथापिधानमस्यमृतत्वाय उपदधामीत्युपस्पृश्य पुनरादाय पुनरुपस्पृशेत्। स ते प्राणा वापो गृहीत्वा हृदयमन्वालभ्य जपेत्।

---

आपोऽमृतमसीति, हे आपः! आप्नोतेरसन्, विधेय-वचनानुरोधेन वा असीत्येकवचनम्। अमा सह हे शिष्य प्राण! 'अन्तोऽसि' अमितोऽसि भोजितोऽसि। अम्‌गतौ भोजने शब्दे। अनामिकया इत्यादौ अङ्गुष्ठः सर्वत्रान्वेति। 'एकऋषौ' अग्नौ तत्राग्नि सूर्य्ये, 'आहवनीये' दर्शनाग्नौ मुखस्थे, 'दक्षिणाग्नौ' शरीराग्नौ हृदयस्थे, 'गार्हपत्ये' कोष्ठाग्नौ नाभिस्थे, सर्वप्रायश्चित्तीये नाभेरधःस्थिते।

'अपिधानम्' आच्छादनम्। अनेन मन्त्रेण द्विराचम्य

प्राणो अग्नि: परमात्मा पञ्चवायुभिरावृत: ।
अभयं सर्वभूतेभ्यो न भवेऽहं कदाचन ॥ इति ।

विश्वोऽसि वैश्वानरो विश्वरूपो
विश्वं त्वया धार्य्यते जायमानम् ।
विश्वन्तु त्वाहुतय: सर्वा
यत्र ब्रह्मा विश्वामृतोऽसि ॥ इति ।

महानवोऽयं पुरुषो योऽङ्गुष्ठाग्रे प्रतिष्ठित: ।
तमद्भि: परिषिञ्चामि सोऽस्यान्ते अमृताय योनौ ॥ इति

एष एवात्मा ध्यायेताग्निहोत्रं जुहोमीति ।

सर्वेषामेव सूनुर्भवति ।

---

ततो वामेन उदकं गृहीत्वा दक्षिणेन हृदयम् 'आलभ्य' स्पृष्ट्वा अमृतोऽसीत्यन्तं जपेत् ।

अभयमिति । सर्वभूतेभ्योऽभयं भवेत् । अहं 'कदाचन' कदाचिदपि न भवे अपि तु भवेयमेवेत्यन्वय: ।

इमे द्वे प्रार्थने । विश्वन्त्विति । विश्वमिव 'त्वा' तव सर्वा आहुतय: । 'यत्र' विश्वस्मिन् ब्रह्मा वर्त्तते, ब्रह्मादिस्तम्बपर्य्यन्तं जगत् तव आहुतय इत्यर्थ: । तर्हि त्वमपि कस्यचिदाहुति: स्या: ? अत आह, विश्वामृत इति । 'विश्वामृतोऽसि' विश्वेषु नित्योऽसि ।

महानिति । 'अव:' अन्नं तर्पक इत्यर्थ: ; 'अमृताय योनौ' निषेकस्थाने अमृतभावाय ; अनेन दक्षिणाङ्गुष्ठाग्रं सिञ्चेत् ।

'एष:' भोक्ता अङ्गुष्ठाग्रे स्थित:, स एवात्मा ज्ञेय: । अत्राग्निहोत्र बुद्धि: कर्त्तव्येत्याह, ध्यायेतेति । 'सूनु:' जनक:

अथ यज्ञपरिवृतयाहुतीर्होमयति स्वे शरीरे यज्ञं परिवर्त्तयामीति, चत्वारोऽग्नयः ; ते किं नामधेयाः ?। तत्र सूर्य्योऽग्निर्नाम सूर्य्यमण्डलाकृतिः सहस्ररश्मिभिः परिवृत एकऋषिर्भूत्वा मूर्धनि तिष्ठति। यस्मादुक्तो दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति।

शारीराग्निर्नाम जराप्रणुद्धा हविरविस्कन्दति। अर्द्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति।

---

सोता, सूते इति व्युत्पत्त्या, न तु रूढ्या, "सूनुः पुत्रेऽनुजे रवौ" इति विश्वोक्तेः। यद्वा 'सूनुः' पुत्रः यथा पितुस्तर्पकः, एवं सर्वेषां तर्पको भवतीत्यर्थः।

यज्ञपरिवृते इति। यज्ञपरिवर्त्तनाय, सम्पदादित्वात् क्विप्। 'अथ' अग्निहोत्रबुद्ध्यनन्तरम्, अधिकारप्राप्तौ आहुतयो यास्ता यज्ञबुद्ध्या 'होमयति' मुखे क्षिपति यज्ञं परिवर्त्तयामीति बुद्ध्या। चत्वार इति। पञ्चमस्य प्रायश्चित्तीयस्य असार्वत्रिकत्वात्।

उपासनार्थं नामानि पृच्छति, ते इति। यस्मादुक्त इति पूर्वेण सम्बध्यते, यस्मात् सूर्य्यः सहस्रदलाधिष्ठातेति वेदेषु उक्तः। तदधस्तनमग्निमाह, दर्शनाग्निरिति। 'चतुराकृतिः' चतुरस्राकृतिः। मुखे इति। तदुक्तम्,—

"जिह्वामूले स्थितो देवि ! सर्वतेजोमयोऽनलः।
तदग्रे भास्करश्चन्द्रस्तालुमूले प्रतिष्ठितः" ॥ इति।

तृतीयाग्निमाह, शारीरेति। 'शारीराग्निः' जठराग्निः

तत्र कोष्ठाग्निरिति, कोष्ठाग्निर्नामाशित-पीत-लीढ़-खादितानि सम्यक् श्रपयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति। प्रायश्चित्तीयस्त्वधस्तात् स्त्रियस्तिस्रो हिमांशुप्रभाभिः प्रजननकर्म्मा।

द्वितीयः खण्डः ॥ २ ॥

---

ज्ञानाग्निः शुभाशुभभोक्ता, 'जराप्रणुदा' जरां प्रणुदति, क्विप् प्रत्ययः। अजरो न जीवो म्रियत इति श्रुतेः। हृदये इति। तदुक्तम्, "हृत्सरोरुहमध्येऽस्मिन्" इत्युपक्रम्य,

"विश्वार्च्चिषं महावह्निं ज्वलन्तं विश्वतो मुखम्" इत्यादि।

'हविः' भुक्तम् 'अविस्कन्दति' अवस्कन्दति शोषयति तद्रसं गृह्णातीत्यर्थः।

तत्र कोष्ठाग्निरिति य उक्तः, स निरूप्यते इति शेषः। प्रतिज्ञातमर्थं दर्शयति, कोष्ठाग्निर्नामेति। 'अशितं' चोष्यं 'लीढ़' लेह्यम्। नाभ्यामिति। तदुक्तम्,—

"नाभिमध्ये भवत्येष भास्करो देहनायकः"। इति।

प्रायश्चित्तीयस्तु अधस्ताद्वर्त्तते सर्व्वेषामिति शेषः। तदुक्तम्,—

"त्रिकोणञ्च पुरं वह्नेरधो मेढ्रादवस्थितम्" इति।

स्त्रियस्तिस्रो यस्य वर्त्तन्ते इति शेषः। नाड़ीनां बाहुल्येऽपि मुख्या नाड्यस्तिस्र एव, इडा-पिङ्गला-सुषुम्णाः; ताभिः किं करोति? इत्यत आह, हिमांश्विति। 'हिमांशोः' ललाटस्थ-चन्द्रमण्डलात् नाड़ीद्वारा च्युताभिः 'प्रभाभिः' शुक्ररूपाभिः 'प्रजननं' प्रजोत्पत्तिः कर्म्म यस्य सः, तथा पुंलिङ्गमूलं ह्यग्नि-कुण्डमध्येऽस्ति; तेनाग्निकुण्डे पतितं शुक्रं प्राणेन

अस्य शरीरयज्ञस्य यूप रशना-शोभितस्य को यजमानः? का पत्नी? के ऋत्विजः? कोऽध्वर्युः? को होता? को ब्राह्मणाच्छंसी? कः प्रतिप्रस्थाता? कः प्रस्तोता? को मैत्रावरुणः? क उद्गाता? के सदस्याः? कानि यज्ञपात्राणि? कानि हवींषि? का वेदिः? का उत्तरवेदिः? केडा? को द्रोणकलशः? को रथः? कः पशुः? कः धारापोता? के दर्भाः? कः स्रुवः? का आज्यस्थाली? का वाघारौ? का वाज्यभागौ? के प्रयाजाः? के अनुयाजाः? कः सूक्तवाकः? कः शंयोर्वाकः? का अहिंसा? के पत्नीसंयाजाः? को यूपः? का रशना? का इष्टयः? का दक्षिणा किमवभृथमिति।

तृतीयः खण्डः ॥ ३ ॥

अस्य शरीरयज्ञस्य यूप-रशना-शोभितस्य आत्मा

---

कष्टं लिङ्गाग्रेण गर्भाशयं प्रविश्य प्रजा भवति; तेनाग्नीषोमात्मकं शरीरमुच्यते।

शरीरयज्ञस्य यूपेनोङ्कारेण रशनयाशया शोभितस्य उपकरणानि पृच्छ्यन्ते, पृष्ट्वा चोत्तरार्थं क्वचित् क्रमेण, क्वचिदुत्क्रमेणानास्थया दृष्टि सम्पादन एव तात्पर्यात्। 'केडा' का इडा, ।

यजमानः, बुद्धिः पत्नी, वेदा महर्त्विजः, प्राणो ब्राह्मणाच्छंसी, अपानः प्रतिप्रस्थाता, व्यानः प्रस्तोता, समानो मैत्रावरुणः, उदान उद्गाता, अहङ्कारोऽध्वर्य्युः, होता चित्तं, शरीरं वेदिः, नासिकोत्तरवेदिः, मूर्द्धा द्रोणकलशः, दक्षिणहस्तः स्रुवः, सव्यहस्त आज्यस्थाली, श्रोत्रे आघारौ, चक्षुषी आज्यभागौ, ग्रीवा धारापोता, तन्मात्राणि सदस्याः, महाभूतानि प्रयाजाः, भूतान्यनुयाजाः, जिह्वेडा, दन्तोष्ठौ सूक्तवाकः, तालुः संयोर्वाकः, स्मृतिर्दयाक्षान्तिरहिंसा पत्नीसंयाजाः, ओङ्कारो यूपः, आशा रशना, मनो रथः, कामः पशुः, केशा दर्भाः, बुद्धीन्द्रियाणि यज्ञपात्राणि, कर्मेन्द्रियाणि हवींषि, अहिंसा इष्टयः, त्यागो दक्षिणा, अवभृथं मरणात्।

---

वेदाः 'महर्त्विजः' ऋत्विजामपि ऋत्विजः सर्वेषामुपदेष्टृत्वात्। सामान्य-प्रश्नस्य विशेष-पर्य्यवसायित्वात् विशेषेणोत्तरं प्राण इत्यादिना। आत्मादीनां यजमानादिसाम्यं स्वातन्त्र्यादिना यथासम्भवमूहनीयम्, 'ग्रीवा' कन्धरा 'धारापोता' धाराभिरुपलक्षितः पोता पावमानाध्येता, 'जिह्वेडा' जिह्वा इडा पात्रविशेषः; स्मृतिः, दया, [क्षान्तिः, अहिंसा,]

सर्वा ह्यस्मिन् देवताः शरीरेऽधिसमाहिताः ।
वाराणस्यां मृतो वापि इदं वा ब्रह्म यः पठेत् ।
एकेन जन्मना जन्तुर्मोक्षञ्च प्राप्नुयादिति ।
मोक्षञ्च प्राप्नुयादिति ।

चतुर्थः खण्डः ॥ ४ ॥

इत्यथर्ववेदे प्राणाग्निहोत्रोपनिषत् समाप्ता ॥१७॥

---

## नीलरुद्रोपनिषत् ।

ओम् अपश्यं त्वावरोहन्तं दिवितः पृथिवीमवः ।

---

चत्वारः पत्नीसंयाजाः. 'मनो रथः' मन एव रथः, 'मरणात्' देहाख्य-मलापनयनात्, 'अवभृथः' यजमानस्य यज्ञान्तस्नानम् ।

ननु भवन्तु यज्ञोपकरणानि, तथापि देवताऽभावे कथं यज्ञः स्यात्? इत्यत आह, सर्वा हीति । यावदधिदैवतं तावदध्यात्मं वर्त्तते, चक्षुरादीनां सूर्य्याद्यधिष्ठितत्वादिति भावः। ननु ज्ञानाभावे कथं मोक्षः ? इत्याशङ्क्य वाराणसी-मरणं दृष्टान्त',। द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानामग्निहोत्रस्य दीपिका ॥
इति प्राणाग्नि-होत्रोपनिषदो दीपिका सम्पूर्णा ॥१७॥

---

श्रीं नीलरुद्रोपनिषदि षोड़श्यां खण्डकत्रयम् ।
श्रुतिरूपेण तं देवं स्तौत्यपश्यमिति क्रमात् ॥ १ ॥
असमग्रंयोगमुद्रा तत्सम्प्रदाय-प्रवर्त्तकं परमगुरुं योगसिद्धि-

अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ॥ १ ॥
दिव उग्रो अवारुचत् प्रत्यष्ठाद्भूम्यामधि।
जनासः पश्यते मह्नं नीलग्रीवं विलोहितम् ॥ २ ॥
एष एत्यवीरहा रुद्रो जलास-भेषजाः।
यत्तेऽक्षेममनीनशद्-वातीकारोऽप्येतु ते ॥ ३ ॥

---

प्रदं नीलरुद्रं स्तौति, अपश्यमिति। 'दिवितः' दिवः 'पृथिवीं' भूमिम् 'अवः' अधस्तात् अवरोहन्तं 'त्वा' त्वाम् अहमपश्यमिति मन्त्रद्रष्टुर्वचः। 'अस्यन्तम्' असुक्षेपणे, क्षिपन्तं दुष्टान्, 'शिखण्डिनं' "शिखण्डो बर्ह-चूड़योः" इति विश्वः। तयोरन्यतरदस्यास्ति शिखण्डी, तम्।

दिवः सकाशात् 'उग्रः' रुद्रः 'अवारुचत्' अवतीर्णवान्, 'प्रत्यष्ठात्' प्रतिष्ठां स्थितिं कृतवान्, 'भूम्यामधि' अधिरीश्वरे इति, अधिः कर्म्मप्रवचनीयः, यस्मादधिकं यस्य चेश्वर-वचनमिति तत्र सप्तमी, भूमेरीश्वरः इत्यर्थः।

'जनासः' आज्जसेरसुक्, सम्बोधने चेति प्रथमा। 'एति' आगच्छति, न वीरहा 'अवीरहा' सौम्यः; यद्वा 'अवीराणि' पापानि हन्तीत्यवीरहा, जले 'आसः' क्षेपो यासां ताः जलासाः, ताश्च ता भेषजाश्च, ता एतीत्यन्वयः, जलक्षिप्तानामोषधीनामक्षेम—निर्व्वीजकत्वं रुद्रसन्निधानादेव। यत् 'ते' तव अक्षेममनीनशत्; अनेन क्षेमकारित्वमुक्तम्।

अलब्धलाभो योगः, तत्कारित्वमप्याह, वातीकार इति। 'वातिः' प्राप्तिः, अप्राप्तं प्राप्तं करोतीति वातीकारः, सोऽपि ते तव अपूर्वलाभकरः 'एतु' आगच्छतु, योग-क्षेमकरोऽभि-

नमस्ते भवभावाय नमस्ते भाममन्यवे ।
नमस्ते अस्तु बाहुभ्यामुतो त इषवे नमः ॥ ४ ॥
यामिषुं गिरिशन्तं हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र ! तां कृणु मा हिंसीत् पुरुषान्मम ५
शिवेन वचसा त्वा गिरिशाच्छावदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥ ६ ॥
या ते इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥ ७ ॥

---

षेकजले सन्निहितो भवत्वित्यर्थः । मन्त्रलिङ्गादभिषेके विनियोगः ।

'भामः' क्रोधः, 'मन्युः' तत्पूर्वावस्था, 'उतः' उ ते 'इषवे' बाणरूपाय ।

'अस्तवे' असुक्षेपणे तवेत्प्रत्ययस्तुमर्थे, अस्तुं क्षेप्सुमित्यर्थः। कं क्षेप्सुं ? 'गिरिशन्तं' शयति शयन्, गिरेः शयन् गिरिशयन्, सम्बन्धसामान्ये षष्ठीसमासः । तं गिरिशन्तं, छान्दसो य-लोपः । हे 'गिरित्र !' गिरिरक्षक ! तां 'शिवां' कल्याणीं 'कृणु' कुरु ।

'अच्छावदामसि' 'अच्छं' निर्मलं वदाम, अच्छशब्दस्य निपातस्येति दीर्घः । इदन्तो मसि इदमर्थको निपातश्च । 'अयक्ष्मं' नीरोगं 'सुमनाः' सुमनस्कम् 'असत्' भवेत् लिङर्थ लेट् तिप्, इतश्च लोपः परस्मैपदेषु लेटोऽडाटावित्यट् ।

'शरव्या' शरसम्बन्धायिनी ज्या, "शरो दध्यग्र-वाणयोः" इति

या ते रुद्र ! शिवा तनूरघोरा पापकाशिनी।
तया नस्तन्वा शन्तमया गिरिशं त्वाभिचाकशत्॥८॥
असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहितः।
ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो
वैषां हेड़ ईमहे॥ ९॥

प्रथमः खण्डः॥ १॥

अदृशन् त्वावरोहन्तं नीलग्रीवं विलोहितम्।
उत त्वा गोपा अदृशन्नुत त्वोदहार्य्यः।
उत त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः॥१०॥

---

विश्वः। शरमर्हति यत्, "अव शरस्य" इति अवादेशः। यद्वा शरुःहृताद्वा सिद्ध "शरुरायुध-कोपयोः" इति विश्वः। उग-वादिभ्यो यत्। 'जीवसे' जीवितुं 'मृड़' मोदय; यद्वा हे मृड़ ! 'तया' तन्वा 'नः' अस्मान् जीवयसि।

'शन्तमया' अतिशयेन शं शन्तमा तया, 'अभिचाकशत्' कशेर्यङ्लुगन्तात्लोट तिप्, अट्, अतिशयेन प्रकाशयत्विति प्रार्थना।

'बभ्रुः' पिङ्गलः, वा एषां ह 'ईडे' स्तुतये 'ईमहे' कामयामहे॥

'गोपा' गोपालाः 'अदृशन्' अपश्यन् 'उदहार्य्यः' पानीय-हारिण्यः। 'विश्वाः' विश्वानि भूतानि अदृशन्, योगिनामप्य-दृश्यं त्वां कृपया आविर्भवन्तम् आदित्यवत् प्रकाशमानं पामरा अपि ददृशुरित्यर्थः। 'वाजिने' नेत्रवते वाणरूपाय वा, सीदन्तीति 'सत्वानः' गणाः।

नमोऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने ।
अथो ये अस्य सत्वानस्तेभ्योऽहमकरं नमः ॥११॥
नमांसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने ॥ १२ ॥
प्रमुञ्च धन्वनस्त्वमुभयो राज्ञोर्ज्याम् ।
याश्च ते हस्त इषवः परस्ता भगवो वप ॥ १३ ॥
अवतत्य धनुस्त्वं सहस्राक्ष ! शतेषुधे ! ।
निशीर्य्य शल्यानां मुखा शिवो नः शम्भुराभरः १४
विज्यं धनुः शिखण्डिनो विशल्यो बाणवानुत ।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः ॥ १५ ॥

---

'नमांसि' नमस्काराः, 'न आतताय' अनातताय, 'धृष्णवे' प्रगल्भाय, बाहुभ्यां कृत्वा धन्वने नमोऽकरवमित्यर्थः ।

'उभयोः' अरि-प्रत्यरि-भूतयोः राज्ञोर्धन्वनो ज्यां 'प्रमुञ्च' अनाततां कुरु, राज्ञोर्विग्रहे लोकानां क्लेशो भवति ; ततस्तं शमय इति भावः । हे भगवः यास्ते हस्ते 'इषवः' बाणाः, ताः 'परावप' पराङ्मुखं मुञ्च, त्वमपि कोपं लोकेषु माकृथा इति भावः ।

इन्द्ररूपेण जगद्रक्षा इति प्रार्थयते । अवतत्येति । धनुः त्वमधिज्य कृत्वा 'सहस्राक्ष !' शक्ररूप ! शतं 'इषुधयः' तूणा यद्रूपा यस्य तत्सम्बोधनं, 'निशीर्य्य' तीक्ष्णीकृत्य 'मुखा' मुखानि 'नः' अस्मान्, 'शिवः' कल्याणरूपः 'शम्भुः' सुखहेतुः सन् 'आभर' धारय पोषय वा ।

'बाणवान्' तूणीरः विशल्योऽस्तु तोमररहितो भवतु, वैरिषु

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः।
अथो य इषुधिस्तवारे! अस्मिन्निधेहि तम् ॥१६॥
या ते हेतिर्मीढुष्टम! हस्ते बभूव ते धनुः।
तया त्वं विश्वतो अस्मानयक्ष्मया परिभुज ॥१७॥
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १८॥
ये चामी रोचते दिवि ये च सूर्य्यस्य रश्मिषु।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥ १९ ॥
या इषवो यातुधानानां ये वा वनस्पतीनाम्।
ये वाऽवटेषु शेरते तेभ्य. सर्पेभ्यो नमः ॥ २० ॥

द्वितीयः खण्डः ॥ २ ॥

---

हतेषु तत्-प्रयोजनाभावात्। 'अनेशन्' अदृश्या अभूवन्. नशिषमुमो वलिख्येत्वमिति वार्त्तिकेन लुङि पुषाद्यङि एत्वम्. 'निषङ्गतिः' निषङ्गः।

'विश्वतः' सर्वतः, अस्मान् 'परिवृणक्तु' परिरक्षतु, अरे सम्बोधने, 'अथो' पश्चात् रक्षणानन्तरं यः तव इषुधिः, अस्मिन् 'तं' हेतिं वाणं निधेहि स्थापय।

हे मीढुष्टम! सेवकतम 'अयक्ष्मया' अरुज्जया 'तया' हेत्या 'परिभुज' परिपालय।

'सदस्कृतं' गृहं 'यातुधानानां' रक्षसां, वनस्पतीनां ये सर्पाः, ते हि जनान् दंशन्ति। 'अवटेषु' गर्त्तेषु।

य: स्वजनान्नीलग्रीवो य: स्वजनान् हरिरुत ।
कल्माष-पुच्छमोषधे ! जम्भयाश्वरुन्धति ॥ २१ ॥
वभ्रुश्च वभ्रुकर्णश्च नीलगलमाल: शिव: पश्य ।
शर्वेण नीलशिखण्डेन भवेन मरुतां पिता ॥२२॥
विरूपाक्षेण वभ्रूणां वाचं वदिष्यतो हत: ।
सर्वनील-शिखण्डेन वीर ! कर्म्मणि कर्म्मणि ॥२३॥
इमामस्य प्राशं जहि येनेदं विभजामहे ।

---

केदाराधीशं महिषरूपं स्तौति, य इति। 'य:' शिव: 'स्वजनान्' भक्तान् प्रति नीलग्रीव:, यश्च स्वजनान् भक्तान् प्रति 'हरि:' हरितवर्णो भक्तवात्सल्येन भवति। महिषस्य हि तादृग्रूपं सम्भवति। हे ओषधे ! 'अरुन्धति' रोधरहिते तं 'कल्माषपुच्छं' कृष्णपाण्डरपुच्छम् 'आशु' शीघ्रं 'जम्भय' स्ववीर्य्येण वीर्य्यवन्तं कुरु, ओषधीनां पशुभ्यो बलप्रदत्वात्। "कल्माषो राक्षसे कृष्णे कल्माष: कृष्ण-पाण्डुरे" इति विश्व:। केदारेश्वरस्य महिषरूपत्वात् पुच्छवत्ता सम्भवति ।

'वभ्रु:' क्वचिदवयवे पिङ्गलवर्ण: ; अत: पिङ्गलवर्णकर्ण:, नीला गले माला यस्य स:, शिव इत्यत्र नीलग्रीवश्च य: शिव इति पाठो युक्त:। पितेति तृतीयार्थे प्रथमा, पित्रा इत्यर्थ:।

अथ वाचं वदिष्यत: पिता देहमात्रस्य जनको ब्रह्मा येन ईश्वरेण हत:, तं त्वं पश्येत्यन्वय:। 'हे वीर ! 'कर्मणि कर्मणि' विहित-प्रतिषिद्धरूपे ।

इमाम् 'अस्य' जनस्य 'प्राशं' पृच्छतीति प्राट्, तां प्राशं पृच्छिकां वाचं 'जहि' वेद-विहित-प्रतिषिद्ध-कर्मविषयं संशयं

नमो भवाय नमः सर्वाय नमः कुमाराय शत्रवे २४
नमो नीलशिखण्डाय नमः सभाप्रपादिने ।
यस्य हरी अश्वतरौ गर्दभावभितः सरौ ॥ २५ ॥
तस्मै नीलशिखण्डाय नमः सभाप्रपादिने ।
नमः सभाप्रपादिने ॥ २६ ॥
तृतीयः खण्डः ॥ ३ ॥
इति नीलरुद्रोपनिषत् समाप्ता ॥ १८ ॥

---

## कण्ठश्रुत्युपनिषत् ।

ओं योऽनुक्रमेण सन्न्यसति, स सन्न्यस्तो

---

निराकुरु इत्यर्थः। 'येन' कर्मणा 'इदं' जगत् 'विभजामहे' कर्मभूमि-भोगभूमि-रूपेण विभक्तं कुर्महे। 'कुमाराय' कालानभिभूताय, 'शत्रवे' संहर्त्रे।

'सभाप्रपादिने' सभां प्रपद्यते तच्छीलः सभाप्रपादी तस्मै सभ्याय इत्यर्थः। 'अश्वतरौ' ईषदनमश्वत्वं ययोः तौ अश्वतरौ, गर्दभादश्वायां जातौ हिसरौ, अभितः सरत इति अभितः सरौ गर्दभौ वर्त्तेते। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां नीलरुद्रस्य दीपिका॥
इति नीलरुद्रोपनिषदो दीपिका सम्पूर्णा ॥ १८ ॥

---

यजुर्वेदे तु चरका द्वादशैषा कण्ठाश्रयः।
सन्न्यासोपनिषत्तुल्या चतुःखण्डा कृतश्रुतिः ॥ १ ॥
य आश्रमानुक्रमेण सन्न्यासः, स एव मुक्त्युपयोगी, न तु

भवति। कोऽयं सन्यास उच्यते? कथं सन्यस्तो भवति?।

य आत्मानं क्रियाभिः सुगुप्तं करोति, मातरं पितरं भार्य्यां पुत्रान् सुहृदो बन्धूननुमोदयित्वा, ये चास्यर्त्विजस्तान् सर्वांश्च पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कुर्य्यात्, सर्वस्वं दद्यात्, यजमानस्याङ्गान् ऋत्विजः सर्वैः पात्रैः समारोप्य,

---

सति रागे आश्रमव्युत्क्रमेण, इत्याह, योऽनुक्रमेणेति। ब्रह्मणो देवान् प्रत्युक्तिरूपा आख्यायिका विद्या सम्प्रदाय-प्रदर्शनार्था। 'अनुक्रमः' "ब्रह्मचारी वेदमधीत्य" इत्यादिवक्ष्यमाणः। कोऽयमिति सन्यास-स्वरूपप्रश्नः। कथमिति प्रकारप्रश्नः।

'क्रियाभिः' ब्रह्मचर्य्यादारभ्य नित्य-नैमित्तिकाभिः 'सुगुप्तं' रचितं पापास्पृष्टम्। 'पूर्ववत्' यथा अग्निष्टोमादौ वृतवान्, तथा वृणीत्वा सन्यासकालेऽपि 'वैश्वानरीं' विश्वानर-देवत्यां, 'सर्वस्वं' यथायोग्यं मात्रादिभ्यः। यद्वा ऋत्विग्भ्यः सर्वस्वं दक्षिणां दद्यात्, ऋत्विजः वृत्वेत् पृत्विक् वृणीत्वा कारणात्, 'अङ्गान्' अङ्गानि हस्त मुख-नासिकादीनि, ऋत्विजः प्रयोज्यकर्तॄन् सर्वैः 'पात्रैः' स्थाल्यादिभिः अधिकरणभूतैः करणैः, यथा स्थाल्या पचतीति, 'समारोप्य' समारोपं कारयित्वा, अग्निषु प्राणान् समारोपयेत् इत्यन्वयः। अयमर्थः। प्रेते यजमाने चितायां यस्मिन्नङ्गे यत् पात्रं स्थाप्यते, तस्याङ्गस्य तस्मिन् पात्रे ऋत्विग्भिः समारोपः कारयितव्यः। यथा स्थाल्यां

यदाहवनीये गार्हपत्ये अन्वाहार्य्य-पचने सभ्यावसथ्ययोश्च प्राणापान-व्यानोदान-समानान्, सर्वान् सर्वेषु समारोपयेत्, सर्वान् सर्वेषु समारोपयेत्।

प्रथमः खण्डः ॥ १ ॥

सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोपवीतं, निष्क्रम्य, पुत्रं दृष्ट्वा, त्वं ब्रह्मा त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत्। यद्यपुत्रो भवति, आत्मानमेवं ध्यात्वाऽनपेक्षमाणं प्राचीमुदीचीं वा दिशं प्रव्रजेत्, चतुर्षु वर्णेषु भैक्षचर्य्यं चरेत्,

---

दक्षिणहस्तस्य, स्रुवयोर्नासिकायाः, इत्येवं तत्तत्पात्रेषु तत्तदङ्गानां समारोपः।

एवं कस्मिन्नग्नौ कस्य प्राणादेः समारोपः ? इत्यत आह, यदाहवनीये इति। 'आहवनीये' पूर्वदिग्भागस्थे प्राणं 'गार्हपत्ये' पश्चिम-दिग्भागस्थे अपानम्, 'अन्वाहार्य्य-पचने' दक्षिणदिग्भागस्थे व्यानं, 'सभ्यावसथ्ययोश्च उत्तरदिग्भागस्थयोः क्रमेण उदान-समानौ समारोपयेत्, 'सर्वान्' प्राणान् 'सर्वेषु' अग्निषु वा। अयमङ्गानां प्राणानाञ्च समारोपो यतीनां विदेहत्व-सिद्धये, अङ्गादिषु हि पात्रादिषु समारोपितेषु शुद्धोऽवतिष्ठते ॥ १ ॥

सशिखान् न तु शिखावर्जं 'निष्कृत्य' मुण्डयित्वा, विसृज्य अप्सु, 'निष्क्रम्य' पुरत उत्तरतो वा गन्तुमारभ्य अनुमन्त्रयेत्

पाणिपात्रेणाशनं कुर्य्यात्, औषधवत् प्राश्नीयात्, यथालाभमश्नीयात् प्राणसन्धारणार्थं, यथा मेदोवृद्धिर्न जायते ।

कृशीभूत्वा ग्रामे एकरात्रं, नगरे पञ्चरात्रं, चतुरो मासान् वार्षिकान् ग्रामे वा नगरे वापि वसेत्, विशीर्णं वस्त्रं वल्कलं वा प्रतिगृह्णमाणो नान्यत् प्रतिगृह्णीयात् । यद्यशक्तो भवति, यो न क्लेशः, स तप्यते तप इति ।

यो वा एवं क्रमेण सन्न्यसति, यो वा व्युत्तिष्ठति, किमस्य यज्ञोपवीतं ? का वास्य शिखा ? कथं वास्योपस्पर्शनमिति ।

---

पुत्रम् । 'एवम्' एवं ध्यात्वा अहं ब्रह्मा अहं यज्ञः अहं सर्वमिति । 'भैक्षचर्य्यं' भिक्षैव भैक्षं, प्रज्ञादिभ्यो णः, भिक्षायाः समूहो वा भैक्षं, भिक्षादिभ्योऽण् इत्यण् । तस्य चर्य्यं चरणं, गद-चर-यम-चानुपसर्गे इति यत् । 'चरेत्' आचरेत् ।

'कृशीभूत्वा' कृशीभूयः कामादि-विकार-निरासार्थम् । 'विशीर्णं' जीर्णं यतीनां वृहद्वस्त्र-स्वीकाराचारस्तु श्रुतिविरुद्धः । 'अन्यत्' नूतनम् अधिकं वा ।

यद्यशक्तो भवति, तर्हि गृह्णीयादित्यनुषङ्गः । 'यो न क्लेशः' तपसि शीतोष्ण-क्षुधादि-सहने न क्लेशः क्लेशरहितः समर्थः, स तप्यते तपः, तत् सहेतैवेत्यर्थः ।

'एवं' मातरं पितरमित्यादि-प्रकारेण 'क्रमेण' ब्रह्मचर्या-

तान् होवाच, इदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं, विद्या सा शिखा, नीरैः सर्वत्रावस्थितैः कार्य्यं निर्वर्त्तयन्नुदपात्रे जलतीरे निकेतनं हि ब्रह्मवादिनो वदन्ति।

अस्तमित आदित्ये कथं वास्योपस्पर्शनमिति। तान् होवाच, यथाहनि तथा रात्रौ नास्य नक्तं नवा दिवा। तदप्येतदृषिणोक्तं सकृद्दिवाहैवास्मै भवति। य एवं विद्वान् नैतेनात्मानं सन्धत्ते, सन्धत्ते।

द्वितीयः खण्डः ॥ २ ॥

---

व्यनुक्रमेण। 'वा' अथवा यः 'व्युत्तिष्ठति' व्युत्क्रमेण सन्न्यस्यति, यदि वेतरथेत्याद्युक्तत्वात् यदहरेव विरजेदित्येवकारेणाविलम्बोक्तेश्च। किमस्येति। यज्ञोपवीताद्यभावे कथं ब्राह्मण्यम्? इति प्रश्नः। कथं वेति। परमहंसस्य यात्राभावात् 'उपस्पर्शनम्' आचमनादि।

'विद्या' ज्ञानम्। कथं वेत्यस्योत्तरं नीरैरिति। 'उदपात्रे' परकीये।

अस्तमिते इति। अत एव लिङ्गाद्रात्रौ तडाकाद्युदकं न स्प्रष्टव्यमिति गम्यते। यथाहनीति, सरागविषयः प्रतिषेध इति भावः। 'ऋषिणा' वेदेन, 'सकृद्दिवा' एकं दिनमेव नित्यं ब्रह्मदर्शितत्वात्। 'एतेन' सन्न्यासोपायेन, इयं शाखान्तरछान्दोग्यश्रुतिः,

"न हि सन्न्यसनादेव सिद्धिं समधिगच्छति" इति स्मृतिः।

देवा ह वै समेत्य प्रजापतिमब्रुवन्, न विदामो न विदाम इति। सोऽब्रवीत् ब्रह्मिष्ठेभ्यो, मे तद्वदतो ज्ञास्यथेति।

ततो वै ते ब्रह्मिष्ठा न वदन्तो न वदन्त इत्येतत् सर्वम्।

देवानां सार्ष्टितां सालोक्यतां सायुज्यतां गच्छति। य एवं वेद, सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोपवीतं, निष्क्रम्य, पुत्रं दृष्ट्वा, त्वं

---

सन्न्यासेनाकृतार्थतां मन्वानास्त्वरमाणा ऊचुः, देवा ह वा इति। 'देवाः' पण्डिताः 'प्रजापतिं' गुरुम् अब्रवीत् 'ब्रह्मिष्ठेभ्यः' ब्रह्मविद्भ्यः, तमतिशयेन ब्रुवन्तो ये ते ब्रह्मिष्ठाः, वेदनिष्ठान् देवान् प्रत्यूचिवानित्यर्थः। ईप्सिततमस्यापि क्रिययाभिप्रेयमाणत्वविवक्षया सम्प्रदानत्वम्। वेदत एव ज्ञानप्राप्तिर्नान्यथेति दर्शयितुं देवानां ब्रह्मिष्ठत्व-विशेषणम्।

किमुक्तवान्? इत्याह, मे तदिति। 'मे' मम 'वदतः' ब्रुवतः सम्बन्धेन 'तत्' ब्रह्म 'ज्ञास्यथेति' ज्ञानं प्राप्स्यथेति सोऽब्रवीत्।

'ततः' अनन्तरं गुरुप्रसादेन ज्ञानप्राप्त्यनन्तरं 'वै' निश्चितं 'ते' देवा ब्रह्मिष्ठा वेदवित्तमाः 'न वदन्तो न वदन्तः' प्रत्येकं मौनिनः स्थिताः, यैर्यैर्ज्ञानं प्राप्तं, ते ते नोचुः कृतार्थत्वादित्यर्थः। वाक्यद्वैच्छान्दसि। 'इति' उपदेशसमाप्तौ। उक्तं सन्न्यासपूर्वकृत्यमुपसंहरति एतत् सर्वमिति। तत् 'एतत् सर्वं' परमहंससन्न्यास-ज्ञानं कथितमित्यर्थः।

ज्ञानस्य फलमाह, देवानामिति। 'सार्ष्टितां' समानर्द्धितां

ब्रह्मा त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं विधाता त्वं त्वष्टा त्वं प्रतिष्ठासीति। अथ पुत्रो वदति, अहं ब्रह्माऽहं यज्ञोऽहं वषट्कारोऽहमोङ्कारोऽहं स्वाहा अहं स्वधाऽहं धाताऽहं विधाताऽहं त्वष्टाऽहं प्रतिष्ठास्मीति तान्येतानि।

अनुव्रजन्नाश्रुमापातयेत्। यदश्रुमापातयेत्, प्रजां विद्यां छिन्द्यात्, प्रदक्षिणमावृत्य एतच्चैतच्चानवेक्षमाणाः प्रत्यायन्ति, स स्वर्गो भवति, स स्वर्गो भवति।

तृतीयः खण्डः॥ ३॥

---

'सालोक्यतां' सलोकतां 'सायुज्यतां' संयुक्तताम् ऐक्यं, स्वार्थस्य ञन्ताभ्यां भावे तल्।

परमहंसविधिः संक्षेपत उक्तः, विस्तरेणाह, सशिखानिति। 'धाता' धारयिता, 'विधाता' कर्त्ता। प्रतिवचनेऽपि अहं स्वाहा अहं स्वधेति द्रष्टव्यम्। 'तान्येतानि' प्रतिवचनानीति शेषः।

पितरि व्रजति नातिदूरमनुव्रजनं कर्त्तव्यं, शोकश्च न कर्त्तव्य इत्याह, अनुव्रजन्नाश्रुमिति। अश्रुपाते दोषमाह, यदिति। 'यत्' यदि, तत उदकान्तं चैत्यवृक्षपर्य्यन्तं वा गत्वा निवर्त्तमानाः 'प्रदक्षिणमावृत्य' पितरं प्रदक्षिणीकृत्य पुत्रादयः 'एतच्चैतच्च' इति वृक्षाराम-तड़ाकादि 'अनवेक्षमाणाः'

ब्रह्मचारी वेदमधीत्य वेदौ वेदान् वा चरित-ब्रह्मचर्य्यो दारानाहृत्य पुत्रानुत्पाद्यताननुरूपाभिर्वृत्तिभिर्वितत्येष्ट्वा च शक्तितो यज्ञैस्तस्य सन्न्यासो गुरुभिरनुज्ञातस्य बान्धवैश्च सोऽरण्यं परेत्य द्वादशरात्रं पयसाग्निहोत्रं जुहुयात्, द्वादशरात्रं पयो भक्षः स्यात्, द्वादशरात्रस्यान्ते-

---

अनवलोकयन्तः 'प्रत्यायन्ति' प्रत्यागच्छन्ति, यमुद्दिश्य न शोचन्ति, स पुमान् पित्रादिः, 'स्वर्गः' नित्यसुखं मोक्षः तमनुभवति ॥ ३ ॥

क्रमसन्न्यास-प्रकारमाह, ब्रह्मचारीति। ब्रह्मचारी सन् वेदं वेदौ वेदान् वा अधीत्येति शक्त्यपेक्षो विकल्पः। चरितं 'ब्रह्मचर्य्यं' ब्रह्मचर्य्य-व्रतानि येन, विद्या-व्रत-स्नातो न्यायागताभिः 'वृत्तिभिः' जीविकाभिः 'वितत्य' विस्तृतधनाः कर्त्तव्याः इत्युक्तत्वात्, यज्ञैः शक्तित इष्ट्वा च यः स्थितः, तस्य सन्न्यासो नान्यस्य, तदुक्तं याज्ञवल्क्येन,—

"अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।
शक्त्या तु यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा" ॥ इति।

तत्रापि विशेषो गुरुभिरिति। 'बान्धवैः' पत्न्यादिभिश्चानुज्ञातः "आश्रमादाश्रमं गच्छेत्" इति वचनात् वानप्रस्थाश्रमपूर्वकः सन्न्यास इति, तमादावाह, सोऽरण्यमिति। 'परेत्य' गत्वा। एकं द्वादशरात्रं होम-भोजने पयसा कार्य्ये इत्याह, द्वादशेति। "यदन्नः पुरुषो लोके तदन्नस्तस्य देवता" इति स्मृतेः पयसा भोजनवद्धोमोऽपि युक्तः।

ऽग्नये वैश्वानराय प्रजापतये च प्राजापत्यं चरुं वैष्णवं त्रिकपालम्, अग्निसंस्थितानि पूर्वाणि दारुपात्राण्यग्नौ जुहुयात्, मृण्मयान्यप्सु जुहुयात्, तैजसानि गुरवे दद्यात्।

मा त्वं मामवहाय परागाः, नाहं त्वामवहाय परागामित्येवं गार्हपत्यमेवं दक्षिणाग्निमेवमाहवनीयमरणिदेशाद् भस्ममुष्टिं पिबेदित्येके।

सशिखान् केशान् निष्कृत्य, विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयात्। अत ऊर्द्ध्वमन-

---

सन्न्यासविधिमाह, द्वादशरात्रस्येति। अग्नये आग्नेयं, वैश्वानराय वैश्वानरं, प्रजापतये प्राजापत्यं चरुं जुहुयादित्यन्वयः। 'त्रिकपालं' त्रिषु कपालेषु संस्कृतं पुरोडाशं विष्णुदेवताकं जुहुयात्, 'अग्निसंस्थितानि' अग्न्यर्थं स्थापितानि अरण्यादीनि "यज्ञाद्-यज्ञं गच्छ" इति मन्त्रेणाग्नौ 'जुहुयात्' प्रक्षिपेत्। 'गुरवे' आचार्य्याय ऋत्विजे।

अग्निप्रार्थनमाह, मात्वमिति। माम् 'अवहाय' हित्वा त्वं मा 'परागाः' परागच्छ। अहमपि त्वां हित्वा 'न परागां' न परागच्छेयमिति त्रीनग्नीन् प्रार्थयते। अरणिदेशादिति। यत्र अरणिर्दग्धा, ततो देशात् 'उद्धृत्य' गृहीत्वा मुष्टिमात्रं भस्म पिबेदित्येके।

'निष्कृत्य' समूलान् निष्काश्य स्थानाद्वहिःकृत्य, डुकृञ् करणे ; यद्वा कृतीच्छेदने, 'निष्कृत्य' निःशेषं छित्त्वा 'सशिखान्' शिखासहितान्, शिखापि न रक्षणीयेत्यर्थः। 'विसृज्य'

शनमपां प्रवेशमग्निप्रवेशं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत्।

स यः सायं प्राश्नीयात्, सोऽस्याः सायं होमः, यत् प्रातः सोऽयं प्रातः, यद्दर्शे तद्दर्शे, यत् पौर्णमास्ये तत् पौर्णमास्ये, यद्वसन्ते केश-श्मश्रु-लोम-नखानि वापयत्, सोऽस्याग्निष्टोमः, सोऽस्याग्निष्टोमः।

चतुर्थः खण्डः ॥ ४ ॥

---

कण्ठादुत्तार्य्य। अत ऊर्द्धमिति। एतावत् स्वयं कृत्वा अनन्तरमनशनादि कुर्य्यात्, इच्छाविकल्पोऽयम्। 'वीराध्वानं' हि युद्धे सम्मुखतयाऽकातर्य्येण मरणम्। तदुक्तम्—

"द्वाविव पुरुषौ लोके सूर्य्यमण्डल-भेदिनौ।

परिव्राड्योग-युक्तात्मा रणे वाभिमुखो हतः" ॥ इति।

यद्वा वीराध्वान-नामकं तीर्थं; तदुक्तं वायुपुराणे उत्तर-खण्डे तीर्थावलिवर्णने,—

"शाङ्करं मानसञ्चैव देवखातमथापरम्।

वीराध्वानं महापीठं पश्चिमोत्तर-दक्षिणे" ॥ इति।

'महाप्रस्थानं' यावन्मरणमुत्तराशा-गमनम्, 'वृद्धाः' ज्ञानिनः, तेषामाश्रमं स्थानं निवासं वा गच्छेत्। अस्मिन् पक्षे वृद्धेभ्यो दीक्षामुपेयात्, दीक्षोपादाने महावाक्योपदेशो योग-यज्ञदानञ्च।

कर्म्म-परित्याग-प्रयुक्त-प्रत्यवाय-शङ्कां निरस्यति, स य इति। अनेन द्विरशनमनुज्ञायते, कादाचित्काभिप्रायश्चेदं, यद्दर्शे

सन्न्यस्याग्नीन् न पुनरावर्त्तयेत्, यन्मन्युर्जायामावहेदिति। अथाध्यात्म-मन्त्रान् जपेत्, स्वस्ति सर्वजीवेभ्य इत्युक्त्वा दीक्षामुपेयात्, काषायवासः, कक्षोपस्थलोमान् वर्जयेत्; लघुमुण्डोऽसूत्रोदरपात्रं कस्मादित्यध्यात्ममस्य ध्यायत ऊर्द्ध्वगो बाहुः।

विमुक्तमार्गो भवेदनिकेतश्चरेत्, भिक्षाशी

---

प्राश्नीयात् तद्दर्शे कर्त्तव्यं, दर्शे दृष्टि-लक्षितं कर्म्म करोतीत्यर्थः। केशेति, कक्षोपस्थवर्जम्। अस्मादेव लिङ्गाद्वसन्ते क्षौरमिति गम्यते। द्विरुक्तिः खण्डसमाप्त्यर्था॥ ४॥

सन्न्यस्येत्यादि सन्न्यासोपनिषदि व्याख्यातम्। शाखाभेदात् क्वचित् पाठभेदः। 'इत्युक्त्वा' अभयं दत्त्वेत्यर्थः। 'दीक्षां' सन्न्यासदीक्षाम् एतावन्तं कालं चैतन्यमेव स्थितः। कक्षोपस्थं श्रितानि 'लोमान्' लोमानि वर्जयेत्; अतएव 'लघुमुण्डः' न गुरुमुण्डनक्रियः, लघुमुण्डं शिरो यस्य इति च। 'असूत्रः' अयज्ञोपवीतसूत्रः, छान्दसः सन्धिः। उदरपात्रं कस्मादिति प्रश्नस्त्रयविषयः, अस्योदरमेव पात्रम्, असूत्रत्वं, मुण्डशिरस्त्वञ्च कस्मादित्यर्थः। अध्यात्ममस्य ध्यायत इति भवेदित्यन्तम् उत्तरम्। 'अस्य' यतेः अध्यात्मं ध्यायतः सतः ऊर्द्ध्वगो बाहुः 'भवेत्' वर्त्तते, प्रसिद्धोऽयमध्यात्मनिष्ठ इति किं वाह्योपवीतादिना इत्यर्थः। ऊर्द्ध्वगोपायुरिति पाठे ऊर्द्ध्वलोकस्यायं 'गोपायुः' रक्षकः नास्येह लोके प्रयोजनमस्तीत्यर्थः। ऊर्द्ध्वो 'गोपायुः' दण्डो यस्य इति वा।

न दद्यात् लवैकं धारयेज्जन्तु-संरक्षणार्थं वर्षा-
वर्जमिति ।

तदपि श्लोकः ।

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनन्तथा ॥१॥
पवित्रं स्नानशाटीञ्च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः ॥ २ ॥
स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत् ।

---

ननु शिखादिकं परलोकोपयोग्यपि भवत्येव इत्यत आह, विमुक्तमार्ग इति। अनेन, दक्षिणोत्तरमार्गौ विमुक्ताविहैव समवनीयत इति श्रुतेरिति भावः। भिक्षामश्नातीति भिक्षाशी, 'न दद्यात् लवैकम्' अन्नमध्ये एकं लवमपि न दद्यात् अधिकाराभावात्, 'धारयेत्' एकत्र तिष्ठेत्। किमर्थम्? जन्तु-संरक्षणार्थम्, कदा? 'वर्षावर्जं' विरोधिलक्षणया वर्षास्वित्यर्थः।

अथवा, अनिकेतः, सन् 'चरेत्' अटेदेव, वर्षावर्जं वर्षासु नाटेत्। तत् कुतः? जन्तु-संरक्षणार्थमित्यन्वयः; वर्षास्वटने हि जन्तवो म्रियन्ते। न दद्यात् भिक्षान्नं भिक्षुकान्तराय, लवैकं धारयेदित्यत्र न इत्येव, भिक्षान्न-लवस्य सङ्ग्रहं न कुर्यादित्यर्थः। इति शब्दो ब्राह्मण-समाप्तौ।

कुण्डिकादिकं त्रिदण्डिनः प्राप्तं परमहंसस्य निषिध्यते, कुण्डिकामित्यादिना। 'यतिः' परमहंसः। ननु स्नान-शौचादिकं पात्राद्यभावे कथं स्यात्? अत आह, स्नानमिति।

नदी-पुलिन-शायी स्याद्देवागारेषु वा स्वपेत् ॥३॥
नात्यर्थं सुख-दुःखाभ्यां शरीरमुपतापयेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत् परान्॥४॥
एतां वृत्तिमुपासन्ते घातयन्तीन्द्रियाणि च ॥

पञ्चमः खण्डः ॥ ५ ॥

इति कण्ठश्रुतिरुपनिषत् समाप्ता ॥ १८ ॥

---

## पिण्डोपनिषत् ।

ओं देवता ऋषयः सर्वे ब्रह्माणमिदमब्रुवन् ।

---

'दानं' जलदानं प्रणवतर्पणम्; ध्यानमिति पाठे 'ध्यानं' समर्पणम्। 'पूताभिः' शुद्धनद्यादि-निष्ठाभिः। जनाकुले देशे शयनं निषेधति, नदीति। 'स्वपेत्' सुप्यात्। न मिष्टान्न-रुचिर्नापि कृच्छ्रादिपरः स्यादित्याह, नात्यर्थमिति। गमनादि-समर्थं शरीरं धारयेदित्यर्थः। तुल्यनिन्दात्मसंस्तुतिः स्यादि-त्याह, स्तूयमान इति। 'घातयन्ति' अभिभवन्ति। अन्ते द्विरुक्तिर्द्रष्टव्या।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां दीपिकेयं कण्ठश्रुतेः ॥

इति कण्ठश्रुत्युपनिषदो दीपिका सम्पूर्णा ॥ १८ ॥

---

ओं खण्डमेकं पिण्डहेतुः सप्तविंशति-पूरणी ।
पिण्डोपनिषदुद्दण्ड-वैराग्य-जननाय सा ॥ १ ॥
संसार-विमुक्तये परमहंससन्न्यास उक्तः; तद्रहितानां विप-

मृतस्य दीयते पिण्डं कथं गृह्णन्त्यचेतसः ? ॥१॥
भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा ।
हंसस्त्यक्त्वा गतो देहं कस्मिन् स्थाने व्यवस्थितः ?॥२॥

ब्रह्मोवाच,—

अहं वसति तोयेषु अहं वसति चाग्निषु ।
अहमाकाशगो भूत्वा दिनमेकन्तु वायुगः ॥ ३ ॥
प्रथमेन तु पिण्डेन कलानां तस्य सम्भवः ।
द्वितीयेन तु पिण्डेन मांस-त्वक्-शोणितोद्भवः ॥४॥
तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।
चतुर्थेन तु पिण्डेन अस्थि-मज्जा प्रजायते ॥ ५ ॥
पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरो मुखम् ।

---

नानां का गतिः ? इति संशये वैराग्यजननाय संसारिणां पराधीनां गतिं निरूपयितुं पिण्डोपनिषदारभ्यते, देवता इति। आख्यायिका विद्या सम्प्रदायाविच्छेद-प्रदर्शनार्था दीयते पिण्डं लोकैरिति शेषः। तच्च शरीरमन्तरेण चेतना-रहिता मृताः कथं गृह्णन्ति ? इति प्रश्नः ।

'पञ्चसु' भूतेषु विषये पञ्चधा देहे गते सति हंसः कस्मिन् स्थाने व्यवस्थितः ? इति द्वितीयः प्रश्नः ।

द्वितीयस्योत्तरमाह, अहमिति ।

भोगोचित-शरीरोत्पत्तिद्वारा चेतनः सन् पिण्डं गृह्णातीति ।

आद्यस्योत्तरमाह, प्रथमेन त्विति । 'कलाः' षोड़श षष्ठ-प्रश्नोक्ताः, यथा,—

षष्ठेन कृतपिण्डेन हृत्-कण्ठं तालु जायते ॥ ६ ॥
सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ।
अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्य्यवान् ॥ ७॥
नवमेन तु पिण्डेन सर्वेन्द्रिय-समाहृतिः ।
दशमेन तु पिण्डेन भावानां प्लवनं तथा ॥ ८ ॥
पिण्डे पिण्डे शरीरस्य पिण्डदानेन सम्भवः ।
पिण्डदानेन सम्भवः ॥ इति ॥ ९ ॥

इत्यथर्ववेदे पिण्डोपनिषत् समाप्ता ॥ २० ॥

---

"कलाः षोड़श भूतानि प्राणोऽन्नं जन्म कर्म्म च ।
श्रद्धा यज्ञस्तपो मन्त्रा मनो मात्रं शरीरकम्" ॥ इति ।

दश पिण्डा दशसु दिनेषु पुत्रादिभिर्दीयमानाः प्रथमादि-शब्देनोक्ताः । 'भावाः' क्षुत्तृषादयः, 'प्लवनम्' उद्बोधः । अय-मर्थो गरुड़पुराणे एतच्छ्रुतिमूल एव सोपपत्तिको भगवता गरुड़ं प्रत्युपपादितः । देहावयवोत्पत्तौ च मूर्द्धादिक्रम उक्तः ; तथा हि,—

"प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ।
ग्रीवास्कन्धं द्वितीये च तृतीये हृदयं भवेत् ॥
चतुर्थे च भवेत् पृष्ठिः पञ्चमे नाभिरेव च ।
षट्-सप्तमे कटिर्गुह्यमूरू चाप्यष्टमे तथा ॥
जानु-पादौ तु नवमे दशमेऽह्नि क्षुधा भवेत् ।
देहभूतः क्षुधाविष्टो गृहद्वारे च तिष्ठति ॥
दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ।
यतो देहे समुत्पन्ने प्रेतो जीवः क्षुधान्वितः ॥

# आत्मोपनिषत्।

ओम् अथाङ्गिरा-स्त्रिविधः पुरुषः; तद्यथा,—वाह्यात्मा, अन्तरात्मा, परमात्मा चेति।

त्वगस्थि-मांस-मज्जालोमाङ्गुल्यङ्गुष्ठ-पृष्ठि-वंश-नख--गुल्फोदर--नाभि--मेढ्र--कट्यूरु--कपोल-भ्रू-ललाट-बाहु-पार्श्व-शिरो-धमनिकाक्षीणि श्रोत्राणि भवन्ति, जायते, म्रियते, इत्येष वाह्यात्मा नाम।

प्रथमः खण्डः ॥ १ ॥

---

अतस्त्वामिष-वाह्येन क्षुधा तस्य न नश्यति।
एकादशं द्वादशञ्च प्रेतो भुङ्क्ते दिनद्वयम्" ॥ इति।
नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्टपद-वाक्यानां पिण्डोपनिषद्दीपिका ॥
इति पिण्डोपनिषदो दीपिका सम्पूर्णा ॥ २० ॥

---

आत्मत्रयी परात्मोपनिषत् खण्डत्रयान्विता।
अष्टाविंशी ग्रन्थसङ्ख्या शाखा शौनकवर्त्तिता ॥ १ ॥

पिण्डग्रहणे विरक्तस्य परमात्मानं बोधयितुं शाखाचन्द्र-न्यायेन आत्मद्वयं निरूप्य निरञ्जनं संसारातीतं परमात्मानं निरूपयितुमियमारभ्यते, अथाङ्गिरा इति। 'अथ' ब्रह्मणा देवर्षीन् प्रति पिण्डनिरूपणानन्तरं तद्विमोचार्थी अङ्गिरा उवाचेति शेषः। वाह्यात्मादयो वक्ष्यमाणलक्षणाः।

जायते म्रियते इति, प्रत्याहारेण षड्भावविकारा यास्कोक्ता गृह्यन्ते। ते यथा, "जायते, अस्ति, वर्द्धते, विपरिणमते,

अथान्तरात्मा नाम पृथिव्यप्-तेजो-वाय्वा-काश-मिच्छा-द्वेष-सुख-दुःख-काम-मोह--विकल्प-नादिभिः स्मृतिलिङ्गोदात्ताऽनुदात्त-ह्रस्व-दीर्घ-प्लुत-स्खलित-गर्जित--स्फुटित--मुदित-नृत्य-गीत-वादित्र-प्रलय-विजृम्भितादिभिः श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः पुराणं न्यायो मीमांसा धर्म्मशास्त्राणीति श्रवण-घ्राणाकर्षण-कर्म्मविशेषणं करोति, एषोऽन्त-रात्मा नाम।

द्वितीयः खण्डः॥ २॥

अथ परमात्मा नाम, यथाक्षरमुपासनीयः। स च प्राणायाम-प्रत्याहार-समाधि-योगानुमाना-ध्यात्म-चिन्तकम्।

---

अपक्षीयते नश्यति च" इति। यत्र पञ्चविंशतिस्त्वगादयो भवन्ति, षड्भावविकाराश्च, स वाह्यात्मा नाम इत्यन्वयः॥१॥

पृथिव्यादि-विजृम्भितादि-पर्य्यन्तैरुपलक्षितः 'विज्ञानात्मा' बुद्धिमयः 'कर्म' सामान्यं श्रवणादि-लक्षणं यः करोति, सोऽन्त-रात्मेत्यन्वयः॥ २॥

ननु परमात्मा वाङ्मनस-गोचरातीतत्वात् कथं ज्ञेयः? इत्याशङ्क्याह, यथेति। 'यथाक्षरम्' यथोपदेशम् 'उपासनीयः' उपास्यो ज्ञेयः, तं त्वौपनिषदं पुरुषं पृच्छामीति तस्य वेदैक-गम्यत्वात्, मनसैवानुद्रष्टव्यमिति श्रुतेः असंस्कृतेन च मनसा

वटकणिका श्यामाक-तण्डुलो बालाग्रशत-सहस्रविकल्पनादिभिर्न लभ्यते, नोपलभ्यते, न जायते, न म्रियते, न शुष्यते, न क्लिद्यते, न दह्यते, न कम्पते, न भिद्यते, न छिद्यते, निर्गुणः साक्षी भूतः शुद्धो निरवयवात्मा केवलः सूक्ष्मो निष्कलो निरञ्जनो निरभिमानः शब्द-स्पर्श-रूप-रस-गन्ध-वर्जितो निर्विकल्पो निरा-काङ्क्षः।

---

अग्राह्यत्वात् संस्कारानाह, प्राणायामेति। प्राणायामादिभि-र्योगानुमानेन च अध्यात्मचिन्तकं प्रति प्रकाशते इति शेषः।

नन्वसौ विभुर्विश्वाधिक-प्रमाणः कथमप्रत्यक्षः? इत्या-शङ्क्याह, वटकणिकेति। यथा 'वटकणिका' वटबीजं सूक्ष्मापि महान्तं वटं सूते, एवमसौ सूक्ष्मोऽपि जगत् सूते। श्यामाक-तण्डुलोऽतिसूक्ष्मोऽपि महान्तं स्तम्बं सूते, तद्वदसावित्यर्थः।

ननु बीजवद्दृष्टीनां प्रत्यक्षोऽपि किं न स्यात्? अत आह, बालाग्रेति।

"बालाग्र-शतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते"॥

इति श्रुतेः। अतिसूक्ष्मत्वात् सर्वथा अप्रत्यक्ष इत्यर्थः। न लभ्यते कर्मेन्द्रियैः, नोपलभ्यते ज्ञानेन्द्रियैः, जन्म-मरण-शोष-क्लेद-दाह-कम्प-भेद-च्छेद-निषेधैः क्रियामात्रं निषिद्धम्। 'साक्षी' साक्षाद्द्रष्टा 'भूतः' सिद्धः 'शुद्धः' सहजागन्तुक-मल-रहितः 'निरवयवात्मा' सावयवात्मभेदशून्यः 'केवलः' सजा-

सर्वव्यापी सोऽचिन्त्योऽवर्ण्यश्च, पुनात्यशुद्धान्यपूतानि, निष्क्रियः संस्कारो नास्ति, इत्येष परमात्मा पुरुषो नाम, एष परमात्मा पुरुषो नाम।

तृतीयः खण्डः ॥ ३ ॥

इत्यथर्ववेदे आत्मोपनिषत् समाप्ता ॥ २१ ॥

---

तीय-विजातीय-भेदशून्यः 'सूक्ष्मः' दुर्लक्ष्यः 'निष्कलः' षोड़श-कला-रहितः 'निरञ्जनः' आगन्तुक-मलरहितः 'निरभिमानः' अहङ्कार-दोष-रहितः शब्देति वाह्येन्द्रिय-दोष-रहितः 'निर्विकल्पः' मनोदोष-रहितः 'निराकाङ्क्षः' आकाङ्क्षादि-बुद्धिदोष-रहितः।

ननु सूक्ष्मश्चेत् कथमाकाशादीनामात्मप्रदः ? इत्यत आह, सर्वव्यापीति। अत एव विकल्पनादिभिरित्युक्तं वस्तुतस्तु अणु-महत्त्वादि-परिमाण-रहित एव स्वमहिम्ना सर्वं व्याप्नोति भगवान्; अतएव 'सः' ईश्वरः अचिन्त्योऽवर्ण्यश्च, 'अशुद्धानि' चाण्डालादीनि 'अपूतानि' पापादिदुष्टानि सत्त्वानि 'निष्क्रियोऽपि ध्यानस्थः पुनाति। यद्यपि आगमशास्त्रे ज्ञानात्मापि चतुर्थ उक्तः शरीरान्तःकरण-जीव-परमात्म-भेदेन, तथापि जीव-परमात्मनोरभेदमाश्रित्य इह त्रिविध एवोक्तः। तदुक्तं गीतासु,—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि, कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥ इति ॥

इदमात्मचतुष्टयं प्रणवस्याकारोकार-मकारात् परं बिन्दु-

# रामपूर्वतापनीयोपनिषत्।

ओं चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ।
रघोः कुलेऽखिलं राति राजते यो महीस्थितः॥१॥

---

नाद-शक्ति-शान्ताख्यावस्था-चतुष्टयात्मकं द्रष्टव्यम्। 'संस्कारः' पूर्वप्रज्ञा, स नास्ति स्वतोऽसङ्गत्वात्। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पद-वाक्यानामात्मोपनिषद्दीपिका॥

इत्यात्मोपनिषदो दीपिका सम्पूर्णा॥ २१॥

---

ओं श्रीराम-तापनीयेऽस्मिन् पञ्चत्रिंशत्तमे मते।
आथर्वणे तथा खण्डा दश पूर्वाभिधे मताः॥ १॥

"यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः।
नाभिह्रदाम्बुजादासीत् ब्रह्मा विश्वसृजां पतिः॥
यस्यावयव-संस्थानैः कल्पितो लोक-विस्तरः।
तद्वै भगवतो रूपं विशुद्धं सत्वमूर्जितम्॥
एतन्नानावताराणां निधानं बीजमव्ययम्"॥ इति स्मृतेः नारायण-कथनानन्तरं सदवतार-कथनावसरे प्राप्ते मुख्यत्वात् रामावतारमादौ निरूपयति, चिन्मये इति। श्रीरामस्वरूपन्तु नारसिंहे निर्णीतम्। 'दशरथे' अधिकरणे 'रघोः' दिलीपात्मजस्य सूर्यवंश्यस्य कुले 'चिन्मये' ज्ञानस्वरूपे 'महाविष्णौ' नानावतार-मूलकारणे हरौ जाते सति रामाभिधा प्रवृत्तेति शेषः। अनेनास्य पूर्णावतारता सूचिता। तस्य निर्वचनम् अखिलं रातीत्यादि।

स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः।
राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥
रामनाम भुवि ख्यातमभिरामेण वा पुनः।
राक्षसान् मर्त्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम्।
धर्म्ममार्गं चरित्रेण ज्ञानमार्गञ्च नामतः ॥ ४ ॥

---

'सः' हरिः विद्वद्भिः लोकेषु राम इति प्रकटीकृतः। 'महीस्थितः' भूमौ नित्यं वसन् 'राति' ददाति साधुभ्योऽखिलं वाञ्छितम्, 'राजते' शोभते च, इत्यन्वर्थता-श्रयणेन राम इति लोकेषु विद्वद्भिः स्मृतः। रातेः प्रकृति-मात्रशेषः, महीस्थित-शब्दस्याद्याक्षरशेषः।

राक्षस-मरण-शब्दयोराद्याक्षर शेष इत्याह, राक्षसा इति। "रामो राक्षस-मर्दनः" इति प्रसिद्धेः। अथवा डित्थादि-शब्द-वद् यदृच्छाशब्द एवायं न क्रिया-शब्दः, गुणातिशयात् प्रसिद्धिं गत इत्याह, स्वेति। 'स्वोद्रेकतः' स्वमहिमतो गुणातिशयाद्वा अनलार्कादेरिव ॥ १ ॥ २ ॥

राम इति नाम भुवि 'ख्यातं' प्रसिद्धिमागतं, नत्वयं क्रियानिमित्त इत्यर्थः। चतुष्टयी शब्दानां प्रवृत्तिरिति पक्षे गुणक्रिया-जाति-शब्दवद्यदृच्छाशब्दोऽस्ति स्वरूपनिमित्तः। निमित्तान्तरमाह, अभिरामेणेति। रमयतीति रामः, ज्वलिति-कसन्तेभ्यो णः। विग्रहान्तरं राक्षसानिति। राक्षसान् मर्त्यरूपेण रामः, आद्याक्षरशेषः। 'मनसिजं चन्द्रं "चन्द्रमा मनसो जातः" इति मन्त्रवर्णात्, यथा प्रभाहीनं करोति, तथा राक्षसान् प्रभाहीनान् कृत्वा विख्यातो यः स राम

**स्वस्य ध्यानेन वैराग्यमैश्वर्य्यं स्वस्य पूजनात्।**
**तथा रामस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥५॥**
**रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ॥**
**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।**
**उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना ॥ ७॥**

---

इत्यर्थः। निमित्तान्तरमाह, राज्यार्हाणामिति। धर्ममार्गमिति। स्वस्य चरित्रेण श्रुतेन धर्ममार्गं राति, 'नामतः' उच्चारितात् ज्ञानमार्गं राति, स्वस्य ध्यानेन वैराग्यं राति, स्वस्य पूजनात् ऐश्वर्य्यं 'राति' ददाति, राज्यार्हाणां महीभृतां तद्येति समुच्चये। अतोऽस्य रामस्य रामाख्या भुवि स्यात्। अथ 'तत्त्वतः' वस्तुतः अर्थत उच्यते इति शेषः ॥ ३ ॥ ४ ॥ ५ ॥

रमन्ते इति। 'अनन्ते' देश काल-कृत-परिच्छेद-शून्ये 'नित्ये' नियते अवयव विकार-शून्ये च, 'आनन्दे' सुखैकरूपे 'चिदात्मनि' चिद्घने अमूर्त्तब्रह्मणि 'योगिनः' निरुद्धेन्द्रियग्रामाः 'रमन्ते' ध्यानेन तृप्यन्ति ; 'इति' हेतोः रामपदेन 'असावेव' दशरथात्मजः 'परं' मुख्यं ब्रह्म अभिधीयते, अधिकरणे वज्।

ननु मूर्त्तस्य कथमानन्त्यादि ? नन्वमूर्त्तस्यापि कथमानन्त्यादि ? इति चेत्, समः समाधिः, अपरिदृष्टार्थ-स्वीकारस्तूभयत्रापि समः ; तस्मात् "द्वावेव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च" इति श्रुतेरसङ्कोच एव न्यायः, वचनानि त्वपूर्वत्वादिति न्यायादलौकिकार्थ-बोधनं श्रुतेरलङ्कार एव ॥ ६ ॥

रामशब्दार्थं निरूप्य ब्रह्मणः कथं शरीरित्वमित्याशङ्का

रूपस्थानां देवतानां पुंस्त्वाङ्गास्त्रादि-कल्पना।
द्वि चत्वारि षड़ष्टासां दश द्वादश षोड़श॥ ८॥
अष्टादशापि कथिता हस्ताः शङ्खादिभिर्युताः।
सहस्रान्तास्तथा तासां वर्ण-वाहन-कल्पना॥ ९॥
शक्ति-सेना-कल्पना च ब्रह्मण्येवं हि पञ्चधा।

---

उत्तरमाह, चिन्मयस्येति। चिन्मयस्य ब्रह्मणः 'रूपकल्पना' मायिकं रूपमित्यर्थः। स्वरूपानतिरिक्तया मायाशक्त्या नरस्यैवैकस्यापि विरुद्ध-नानाधर्माविरोध इति भावः॥ ७॥

तदायुधादिकमपि कल्पितमेवेत्याह, रूपस्थानामिति। रूपे तिष्ठन्तीति रूपस्थाः, तासां, देवतानां पुंस्त्वकल्पना यथा रामः पुमान्, स्त्रीत्वकल्पना यथा सीता स्त्री, अङ्गकल्पना यथा त्रिनयनचतुर्भुजत्वादि रुद्र विष्ण्वादीनाम्, अस्त्रकल्पना यथा शार्ङ्गं धनुः, नन्दकः खड्गः; आदिशब्दाद्भूषणवाहनादि-कल्पना।

उक्तमर्थमुदाहरति, द्वि चत्वारीति। 'आसां' देवतानां 'द्वि' द्वौ हस्तौ कथिताविति विपरिणामोऽविभक्तिकश्च निर्देशः। तथा 'चत्वारि' चत्वारो हस्ताः कथिताः, यथा हरेर्लिङ्गव्यत्ययः। तथा तासां षड्भुजाः कथिताः, यथा मूर्त्तिभेदानामम्बिकाया अष्टहस्ताः पुरुषोत्तमस्य दश शङ्करस्य द्वादश षोड़शाष्टादश चण्डिकामूर्त्तिभेदानाम्। 'शङ्खादिभिः' आयुधैः। सहस्रहस्ता विश्वरूपस्य। 'वर्णाः' श्याम-श्वेतादयः, 'वाहनानि' पक्षीन्द्रादीनि तेषां कल्पना न तु वस्तुवृत्तिः॥८॥९॥

शक्तेरपि कल्पना, स्वरूपातिरिक्तायाः पृथक् शक्तेरभावात् तस्याः पार्थक्यं कल्प्यते। अथवा, प्रभु-मन्त्रोत्साह-लक्षणा-

**कल्पितस्य शरीरस्य तस्य सेनादि-कल्पना ॥१०॥**
**ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादि-सञ्ज्ञकः।**
**जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥११॥**

---

स्त्रिस्रः शक्तयः, तासां कल्पना, 'सेना' सैन्यं, तस्याः कल्पना। एवं ब्रह्मणि पञ्चधा कल्पना, रूपकल्पना, ।१। पुंस्त्यङ्गास्त्रादि-कल्पना ।२। वर्णवाहन-कल्पना ।३। शक्ति-कल्पना ।४। सेना-कल्पना चेति ।५। अथवा, ब्रह्मण्येवं हि पञ्चधेति परेणान्वेति। ब्रह्मणि पञ्चायतनभेदेन कल्पितस्य देहस्य सतः तस्य सेनादि-कल्पना ॥१०॥

'ब्रह्मादीनां' स्थावरान्तानां वाचकोऽयं 'मन्त्रः' राममन्त्रः। वक्ष्यति हि "तथैव रामबीजस्थं जगदेतच्चराचरम्" इति। यद्वा "इति रामपदेनासौ परं ब्रह्म" इत्यादीनां पूर्वोक्तानामर्थानां 'वाचकः' रामनामात्मको मन्त्रः। आदिशब्दः पूर्वोक्तसन्नि-वेशापेक्षः।

यद्वा 'ब्रह्म' अद्वैत-परमानन्दात्मा, तदादीनां वक्ष्यमाण-सप्तचत्वारिंशद्ग्रहानां, "रमन्ते योगिनोऽनन्ते" इत्याद्युक्तस्य मूलव्यूहस्य च वाचकः, 'अन्वर्थं' सर्वार्थानुगतं ब्रह्म तत्त्वादि-प्रपञ्चजातं, तस्य 'सञ्ज्ञा' ज्ञानं यस्मात् सोऽन्वर्थसञ्ज्ञः, स्वार्थे कः, सर्ववाचक इत्यर्थः।

यद्वा द्वन्द्वगर्भो बहुव्रीहिः, अन्वर्थ-सञ्ज्ञकः, आदिसञ्ज्ञ-कश्च, अन्वर्थता "मननात्त्राणनान्मन्त्र" इति, "राक्षसा मरणं यान्ति" इत्यादिश्च ; आदिमञ्ज्ञकः आदिमन्त्रत्वात्। स च 'मन्त्रिणा' गुरुतो लब्धमन्त्रेण जप्तव्यः। विपक्षे बाधकम् एव-मिति। 'एवं विना' अर्थस्मरण-पूर्वकमन्त्रजपं विना 'देवः' परमेश्वरः न प्रसीदति ॥ ११ ॥

**क्रिया-कर्मेति-कर्तृणामर्थं मन्त्रो वदत्यथ ।**
**मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः ॥१२॥**
**सोऽभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना ।**
**विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ॥१३॥**
**स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते ॥**

---

'क्रिया' आह्वानादिरूपा, 'कर्म' रत्नोमारणादि, 'इति' इदमात्मकं कर्तृणां मतां देवानाम् अर्थं मन्त्रो वदति । मन्त्रत्वं कस्मादत आह, अथेति । 'मननात्' बोधनात् 'त्राणनात्' त्राणात् मन्त्रः, त्राणस्य कारणं त्राणनं, मननेन त्रायते इति विग्रहः । आद्यः सम्पदादित्वात् क्विबन्तः, अन्त्यः सुपिस्थ इति कान्तः । सर्वस्य 'वाच्यस्य' वक्तव्यस्य व्यूहद्वयात्मकस्य वाचकः प्रणववत् ब्रह्माभिधायकत्वात् ब्रह्मणि च सर्वान्तर्भावादित्यर्थः ॥ १२ ॥

सेति । 'सा' यन्त्रकल्पना उभयस्य पुम्प्रत्यचात्मकस्य मूर्तात्मकस्य सूक्ष्मस्थूल-व्यूहात्मकस्य वा अस्य देवस्य 'विग्रहः' शरीरं, यन्त्रस्य देवानां सेनारूपत्वात्, तस्य सेनादि-कल्पनेति श्रुतेश्च सर्वदेव-शरीरमित्यर्थः ।

अथवा 'सः' मन्त्रः 'अभयस्य' निर्भयस्य 'देवस्य' रामस्य 'विग्रहः' शरीरं "मूर्त्तिं मूलेन कल्पयेत्" इति स्मृतेः, ततो यन्त्रकल्पना कर्त्तव्या, अयं विधिः । अकरणे बाधकं विनेति ॥ १३ ॥

देवस्वरूपमाह, स्वभूरिति । 'स्वयम्' अन्यनिरपेक्षः 'भवति' विद्यते स्वभूः, 'ज्योतिर्मयः' प्रकाशात्मा, 'अनन्तः' देशतः कालतश्च परिसमाप्तिरहितः । अनन्त इत्येव वक्तव्ये

जीवत्वेनेदमों यस्य सृष्टि-स्थिति-लयस्य च ॥१४॥
कारणत्वेन चिच्छक्त्या रजःसत्त्व तमो-गुणैः ।
यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥ १५ ॥
तथैव रामबीजस्थं जगदेतच्चराचरम् ।
रेफारूढ़ा मूर्त्तयः स्युः शक्तयस्तिस्र एव चेति ॥१६॥
सीता-रामौ तन्मयावत्र पूज्यौ
जातान्याभ्यां भुवनानि द्विसप्त ।

---

रूपीतिपदं रूपवत्त्वेऽप्यनन्तताऽव्याहतिसूचनार्थम् । स्वेनैव भासते न त्वन्येन स्वप्रकाशत्वात् । अथच 'स्वभूः' विन्दुः 'ज्योतिर्मयः' रेफमिलितः आकारेण निरूपितो मध्य आलिङ्गितो रामितिमन्त्रः 'स्वेनैव' स्वात्मनैव भासते, शब्दस्य हि स्वं स्वं रूपमर्थो वाच्यश्चेति । यद्वा स्फोटस्य ब्रह्मरूपत्वात्, तस्य च स्वप्रकाशत्वात् ।

जीवत्वेनेति । यस्य जीवत्वेन स्थित्युत्पत्ति-लयस्य च कारणत्वेन चिच्छक्त्या रजः-सत्त्व तमो-गुणैः यथासङ्ख्य-मिदं वर्त्तते, यस्य चिच्छक्त्या जीवत्वेन गुणैः कारणत्वेन च 'इदं' सर्वं भातीत्यर्थः । कथं भूतम् इदम् ? 'ओं' परमात्मरूपमेव, वस्तुगत्या यथैवोङ्कारः, तथैव रामबीजमिति ।

वटबीजं दृष्टान्तमाह, यथैवेति । प्राकृतः प्रकृतेर्वटबीजादुत्पन्नः ॥ १४ ॥ १५ ॥

रेफारूढ़ा इति । रेफोपरिस्थाः 'रः' कृष्णः 'आ' ब्रह्मा 'मः' महेश्वरः तिस्रो मूर्त्तयः, तिस्रः 'शक्तयः' उत्पत्ति-स्थिति-संहारशक्तयः ॥ १६ ॥

सीता-रामौ 'तन्मयौ' प्रकृति-पुरुषमयौ अत्र बीजेन पूज्यौ

स्थितानि च प्रहृतान्येव तेषु
ततो रामो मानवो माययाऽधात् ॥ १७ ॥
जगत्-प्राणायात्मनेऽस्मै नमः स्यात्
नमस्त्वैक्यं प्रवदेत् प्राग्गुणेन इति ॥ १८ ॥ २ ॥
जीवावाचि नमो नाम चात्मा रामेति गीयते।
तदात्मिका या चतुर्थी तथा चायेति कथ्यते ॥१९॥

---

बीजस्य मूर्त्तित्वात् "मूर्त्तिं मूलेन कल्पयेत्" इत्युक्तेः। 'आभ्यां' सीतारामाभ्यां 'द्विसप्त' द्विरावृत्तानि सप्त, चतुर्दशेत्यर्थः, 'जातानि' उत्पन्नानि, 'स्थितानि च' तयोरेव स्थितिं प्राप्तानि, 'प्रहृतानि' लीनान्येव, 'तेषु' अकारोकार-मकारेषु ब्रह्म विष्णु-महेश्वरेषु; 'ततः' कारणात् रामो 'मायया मानवोऽधात्' कपटेन मानवोऽहमिति दध्यौ ॥ १७ ॥

'जगत्-प्राणाय' जगतां प्राणाय आत्मने 'अस्मै' रामाय नमनं 'नमः' नमस्कारः स्यात्, कर्त्तव्य इत्यर्थः। नमस्तु कृत्वेति शेषः, नमस्कारन्तु कृत्वा 'प्राक् गुणेन' गुणेभ्यः प्राग्रूपेण ब्रह्मणा सह ऐक्यं नमस्यदेवताया वदेत्। नमस्यैक्यमिति पाठे स्पष्टोऽर्थः। इति शब्दः खण्डसमाप्तौ ॥ १८ ॥ २ ॥

मन्त्रपदार्थमाह, जीवावाचीति। 'नमो नाम' नम इति नाम, नम इति प्रादिपदिकम्, 'जीवावाचि' जीवमार्वाक्ति, तस्य नामत्वात् नत्वाभिधानम्। रामेति नाम्ना च आत्मा गीयते। 'तदात्मिका' तेन रामेण आत्मना सह ऐक्यमापन्ना एकपदतां गता या चतुर्थी-विभक्तिः आयेति, तया तथा कथ्यते

**मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः ।**
**फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २० ॥**
**यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् ।**
**तथा वीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत्॥२१॥**
**वीज-शक्ती न्यसेद्दक्ष-वामयोस्तनयोरपि ।**
**कीलो मध्ये विना भाव्यः स्ववाञ्छा-विनियोगवान् २२**

---

तथोच्यते, जीवात्म-परमात्मनोरैक्यमेवोच्यते ; तेन यस्तत्त्वम-स्यादिवाक्यार्थः, स एवास्य मन्त्रस्यार्थ इत्यर्थः ॥ १९ ॥

वाक्यार्थमाह, मन्त्रोऽयमिति । अयं मन्त्रो वाचको रामस्य ; रामोऽस्य मन्त्रस्य वाच्यः स्यात् ; 'एतयोः' वाच्य-वाचकयोः 'योगः' योजनमात्मना सहैक्यापादनं, सर्वेषां साधकानां फलप्रदः इति निश्चितमेव, तत उक्तम्,—

"देवता-गुरु-मन्त्राणां भावयेदैक्यमात्मना" । इति । २० ॥

यथेति । यथा यः 'नामी' नामवान्, स वाचकेन नाम्ना आकारितः सन् अभिमुखो भवेत् आकारयितुरिति शेषः । यद्वा, 'आययति' आकारयति आय्, अय्गतावाङ्पूर्वः क्विप्, तस्य, आकारयितुरित्यर्थः । तथा वीजात्मकः नामवज्ज्ञातव्यं, येन आकारितो देवो मन्त्रिणोऽभिमुखः शीघ्रफलदो भवेदिति पदार्थ-वाक्यार्थ-ज्ञानफलमुक्तम् ॥ २१ ॥

न्यासमाह, वीजेति । 'वीजम्' आद्यपदं, 'शक्तिः' उत्तर-पदम्, तदुक्तं शौनककल्पे,—

"जानीयात् प्रथमं वर्णं वीजं शक्तिं नतिन्तथा" ॥ इति ।

वीजं दक्षिणस्तने, शक्तिं वामस्तने न्यसेत् । केचन आयेति शक्तिमाहुः । कील इति । कीलो य इति वर्णो 'मध्ये' स्तनयोः

**सर्वेषामेव मन्त्राणामेष साधारणः क्रमः ।**
**अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ २३ ॥**

---

मध्ये विना भाव्यः, नियमेन न्यसनीयः। न केवलं हृदि कीलो न्यास्यः, किन्तु स्वस्य 'वाञ्छा' अभिलाषो विनियोगश्च, तावपि न्यास्यावित्याह, स्वेति। प्रयोगस्तु, श्रीराम-प्रीत्यर्थे लक्ष्म्यादि-प्राप्तये वा जपे पूजायां वा विनियोग इति हृदि स्मर्त्तव्यमिति। यद्वा ननु हृदये कीलन्यासस्य किं प्रयोजनम्? अत आह, स्वेति। स्वस्य या 'वाञ्छा' साधकस्य योऽभिलाषः, तस्याः यो 'विनियोगः' विशेषेण नियोगः भवेदिति प्रेरणं, तद्वान् साधकेच्छापूरक इत्यर्थः ॥ २२ ॥

सर्वेषामिति। वीजं, शक्तिः, कीलकमिति त्रयं स्ववाञ्छा-विनियोगाभ्यां सहितमुक्तस्थानेषु न्यसनीयमिति, सर्वमन्त्रस्य साधारणो विधिरित्यर्थः। उद्धारः शिष्टन्यासा ऋष्यादयः षडङ्गानि च यथा,—

"अनन्तो न्यासतः सेन्दुवीजं रामाय हृन्मनुः।
षड़क्षरोऽयमादिष्टो भजतां कामदो मणिः॥
ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः।
दैशिकेन्द्रैः समाख्यातो रामो राक्षस-मर्दनः॥
दीर्घभाजा स्ववीजेन कुर्य्यादङ्गानि षट् क्रमात्।
ब्रह्म-रन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः॥
षड़क्षराणि विन्यस्येन्मन्त्रस्य मनुवित्तमः" ॥ इति।

आद्यं वीजन्तु रां, तस्य ध्यानमाह, अत्रेति। 'रामः' दाशरथिः, 'अनन्तरूपः' ब्रह्मरूपः 'तेजसा' बलेन वह्नितुल्यः, अथ च रामः 'अनुष्णगुना' चन्द्रेण सीतया विश्लो व्याप्तः वेष्टितश्चेत्, तदा पुम्प्रकृत्यात्मकं जगत् सिद्धम्, अथ 'चन्द्रेण'

सत्वनुष्याग्नु विश्वश्चेदग्नीषोमात्मकं जगत् ।
उत्पन्नं शीतया भाति चन्द्रश्चन्द्रिकया यथा ॥२४॥
प्रकृत्या सहितः श्यामः पीतवासा जटाधरः ।
द्विभुजो कुण्डली रत्नमाली धीरो धनुर्धरः ॥२५॥
प्रसन्नवदनो जेता धृष्ट्यष्टक-विभूषितः ।
प्रकृत्या परमेश्वर्य्या जगद्योन्याङ्किताङ्कभृत् ॥२६॥
हेमाभया द्विभुजया सर्वालङ्कृतयाचिता ।
श्लिष्टः कमल-धारिण्या पुष्टः कोशलजात्मजः ॥२७॥

---

विश्वविन्दुनाविष्टश्चेत्, तदा अग्नीषोमात्मकं जगत्, तद्वाचकः गमिति सिद्धम्। उत्पन्नमिति पूर्वेण सम्बध्यते। स रामः 'शीता' लाङ्गल-पद्धतिः, शेते शीता, औणादिकस्तन् प्रत्ययः। तज्जत्वात् जनकात्मजापि शीता, तया भाति ; दृष्टान्तश्चन्द्र इति ॥ २३ ॥ २४ ॥

इदानीं ध्यानार्थं देवस्वरूपमाह, प्रकृत्येति। श्यामो वर्णेन 'धीरः' निर्भयः।

'धृष्टिः' प्रागल्भ्यः सा च 'अष्टकम्' अणिमाद्यष्टकञ्च, तेन 'विभूषितः' शोभितः। अथवा, धृष्ट्याद्यष्टकावरणेन। 'प्रकृत्या' मूलप्रकृतिरूपया 'परमेश्वर्य्या' परमया ईश्वर्य्या जगतां 'योन्या' उत्पत्तिहेतु-भूतया 'अङ्कितः' चिह्नितः यः 'अङ्कः' उत्सङ्गः, तं बिभर्त्ति ॥ २५ ॥ २६ ॥

'सर्वालङ्कृतयाचिता' सर्वेण अलङ्कृतेन अलङ्कारेण 'आचितया' व्याप्तया। सर्वालङ्कृताचितया इति वक्तव्ये छान्दसो विभक्त्यमंधे प्रयोगः। यद्वा, सर्वैरलङ्कारैरलङ्कृतया, तथा

दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः।
हेमाभेनानुजेनैव तदा कोणत्रयं भवेत्॥ २८॥
तथैव तस्य मन्त्रस्य यस्याणुश्च स्वङेतया।
एवं त्रिकोणरूपं स्यात् तं देवा ये समाययुः॥२९॥
स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम्।
कामरूपाय रामाय नमो माया-मयाय च॥३०॥

---

'चिता' चिच्छक्ति-रूपया। सर्वथालङ्कृतया तथा श्लिष्ट इति युक्तः पाठः। 'पुष्टः' विपुलाङ्गः, 'कोमलाङ्गः' कोशलजायाः कौशल्यायाः आत्मजः पुत्रः॥ २७॥

दक्षिणे इति। दक्षिणे भागे लक्ष्मणेन श्लिष्टः, अर्थात् वामे शीतया श्लिष्टः। तदुक्तम्—

"वामभागे समासीनां शीतां काञ्चन-सन्निभाम्" इति।

'तदा' देवतात्रय उपविष्टे सति 'कोणत्रयं भवेत्' एकं त्रिकोणं भवेदित्यर्थः। अनुजेनैवेत्येवकारेण अस्मिन् त्रिकोणे देवतान्तर-पूजा वार्य्यते॥ २८॥

तथैवेति। यथा वीजमुक्तम्, एवं तस्य 'मन्त्रस्य' राममन्त्रस्य शेषोऽंश उच्यते इति शेषः। तस्य कस्य? यस्य स्वङेतया सह अणुः 'स्वं' रामस्वरूपं शब्दः, तस्य 'ङेता' विभक्तिश्चतुर्थ्येकवचनं तेन सह 'अणुः' सूक्ष्मो भागः नम्रांशो नतिः नमःशब्द इत्यर्थः। ङेतो रामो नमःशब्दः स्वमन्त्रशेषोऽंश इत्यर्थः। 'एवं' सति षड़क्षरे मन्त्रे सिद्धे सति द्वितीयं त्रिकोणरूपं स्यात्, त्रिकोणद्वये कोणषट्क-षड़क्षर-समावेशार्थं, तं देवा इति। ये देवाः तं समाययुः॥ २९॥

द्रष्टुं लब्धावसरास्ते तं स्तुतिं स्तूयते यः, स स्तुतिः, तं

नमो वेदादिरूपाय ओङ्काराय नमोनमः ।
रामाधाराय रामाय श्रीरामायात्ममूर्त्तये ॥ ३१ ॥
जानकीदेह-भूषाय रक्षोघ्नाय शुभाङ्गिने ।
भद्राय रघुवीराय दशास्यान्तक-रूपिणे ॥ ३२ ॥
रामभद्र ! महेष्वास ! रघुवीर ! नृपोत्तम ! ।
भो दशास्यान्तकास्माकं रक्ष, देहि श्रियञ्च ते॥३३॥
त्वमैश्वर्य्यं दापयाथ सम्प्रत्याखरमारणम् ।
कुर्विति स्तुत्य देवाद्यास्तेन साईं सुखं स्थिताः॥३४

'स्तुतिं' स्तुतिविषयं चक्रुः । स्तुतिमाह, कामेति । 'कामिन' स्वेच्छया रूपं यस्य, तस्मै, 'रामा' स्त्री, तस्याः 'धाराय' धर्त्रे, रमाधारायेति युक्तः पाठः । 'शुभाङ्गिने' शुभमङ्गमस्यास्ति शुभाङ्गी, तस्मै । क्वान्दसत्वात् कर्मधारयादपि मत्वर्थीयः साधुः, शुभश्चासावङ्गी चेति वा, 'अङ्गी' प्रधान-पुरुषः ॥३०॥३१॥३२॥

रामभद्र इत्यादि सम्बोधन-चतुष्टयम् । भो भगवन् 'दशास्यान्तक !' दश आस्यानि यस्य सः दशास्यः रावण, तस्य अन्तक ! अस्माकं 'रक्ष' रक्षणं कुरु, 'ते' तव श्रियञ्च अस्मभ्यं देहि । यद्वा 'ते अस्मान्' त्वदीयानस्मान् श्रियं देहीत्यन्वयः । त्वम् 'ऐश्वर्य्यम्' ईश्वरभावं 'दापय' राक्षसैर्गृहीतं प्रत्यर्पय, 'अथ सम्प्रति' इदानीं सङ्क्षेपेण प्रार्थयामहे, 'आखरमारणं' खरो नाम राक्षसः, तस्य मारण-पर्य्यन्तं कुरु, भो दशास्यान्तक ! अस्माकं रक्षेत्यादिना प्रार्थितन्तु पौरुषं पश्चात् करिष्यसि । 'इति स्तुत्य' एवं स्तुत्वा 'देवाद्याः' मुख्यदेवाः 'तेन' रामेण सार्द्धं सुखं यथा स्यात्तथा स्थिताः रावणवधेन निज-

स्तुवन्त्येवं हि ऋषय-स्तदा रावण आसुरः।
रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ॥ ३५ ॥
स रावण इति ख्यातो यद्वा रावाच्च रावणः।
तद्व्याजेनेक्षितुं शीतां रामो लक्ष्मण एव च ॥३६॥
विचेरतुस्तदा भूमौ देवीं सन्दृश्य चासुरम्।
हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया ॥३७॥

---

शीलाभं प्रतीक्षमाणाः। अन्तिस्तुत्येति पाठे 'अन्ति' समीपे स्थिता इत्यन्वयः ॥ ३३ ॥ ३४ ॥

न केवलं देवाद्याः, किन्त्वन्येऽपीत्याह, स्तुवन्तीति। यथा च देवाः स्तुवन्ति, एवमृषयोऽपीत्यर्थः। 'तदा' खरादिषु हतेषु, रावणनामा 'आसुरः' असुर एव आसुरः 'यः' प्रसिद्धः, स राम-पत्नीं वनस्थां 'स्वनिवृत्त्यर्थं' स्वविनाशार्थम् आददे ॥ ३५ ॥

स इति। रामपत्नीं वनस्थामाददे यः, स रावण इति रावण-पदव्युत्पत्तिः। 'यद्वा' अथवा, 'रावात्' शब्दात्, कैलास-तोल-नावसरे ईश्वरेण भारे दत्ते रौति स्म; तेन रावणः; ततः पूर्वन्तु दशाननामाभूत्। तदिति। 'तत्' तस्मात्, यतः राम-पत्नीमाददे, तस्मात् कारणात् शीतामीक्षितुं यद्व्याजं, तेन। शीताशब्दो दन्त्यादिस्तालव्यादिरपि ॥ ३६ ॥

विचेरतुरिति। न सीतेक्षणमुद्देश्यम्, किन्तु दशास्य-वध एवोद्देश्यः, यदर्थं देवप्रार्थनया अवतीर्णः। 'भूमौ' उपानदाद्य-नन्तर्हितायां विचेरतुः, 'देवीं' राजपत्नीं सीतां 'सन्दृश्य' इत-स्ततो विलोक्य 'असुरं कबन्धं' हत्वा 'शबरीं' तापसीं 'गत्वा' प्राप्य तत्र तत् स्वागतं गृहीत्वा 'तस्य' रामस्य आज्ञया 'तया'

पूजितावीरपुत्रेण भक्तेन च कपीश्वरम् ।
आहूय शंसतां सर्वमाद्यन्तं राम-लक्ष्मणौ ॥३८॥
स तु रामे शङ्कितः सन् प्रत्ययार्थञ्च दुन्दुभेः ।
विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ ३९ ॥
सप्ततालान् विभिद्याशु मोदते राघवस्तदा ।
तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ॥४०॥

---

शबर्य्या पूजितौ सन्तौ 'ईरः' वायुः तस्य पुत्रेण 'भक्तेन' भजनपरेण हनूमता करणेन प्रयोज्यकर्त्रा वा 'कपीश्वरं' सुग्रीवम् आहूय 'शंसताम्' अशंसतां कथितवन्तौ सर्वम् 'आद्यन्तम्' आदिश्च अन्तश्च आद्यन्तौ तम् आद्यन्तं, वाञ्छिताग्न्यादिषु, आदित आरभ्य अन्तं यावत् ॥ ३७ ॥ ३८ ॥

ततो रामेण सुग्रीवस्य राज्ये प्रतिज्ञाते सति, स तु रामे 'शङ्कितः' बालिबधे रामस्य सामर्थ्यमस्ति न वेति सन्दिग्धः सन् 'प्रत्ययार्थं' स्वविश्वासार्थम्। 'तत्प्रत्ययार्थम्' इति पाठे 'तस्मिन्' रामे पौरुषस्य विश्वासार्थं 'दुन्दुभेः' दैत्यस्य बालिहतस्य 'विग्रहम्' अस्थिपुञ्जं रामाय दर्शयामास, अयं दैत्यो बालिना हत इति। ततो 'यः' रामो दुन्दुभेर्द्रष्टा, स 'तं' दुन्दुभिम् 'अचिक्षिपत्' अनतिप्रयत्नेनैव क्षिप्तवान्। अथवा "यस्तु मातरिश्वनि" इति निर्घण्टः ; 'यः' मातरिश्वा इव वायुरिव तूलपुञ्जं, शीघ्रकारी रामः 'तं' विग्रहम् अचिक्षिपत् ॥ ३९ ॥

ततो बलनिश्चये सत्यपि धानुष्कता-सन्देह-निरासार्थं सप्ततालान् एकेन बाणेन 'आशु' शीघ्रं 'विभिद्य' निर्भिद्य मोदते रघोरपत्यं 'राघवः' रामः। वर्त्तमानकाल-निर्देशस्तु कल्पे कल्पे एवं भवतीति द्योतनार्थम्। तेन सुग्रीवो हृष्टः सन्

जगामागर्जदनुजो बालिनो वेगतो गृहात्।
बाली तदा निर्जगाम तं बालिनमथाहवे ॥ ४१ ॥
निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः।
हरीनाहूय सुग्रीवस्त्वाह चाशाविदोऽधुना ॥४२॥
आदाय मैथिलीमद्य ददत श्वाशु गच्छत।
ततस्ततार हनूमानब्धिं लङ्कां समाययौ ॥ ४३ ॥
सीतां दृष्ट्वासुरान् हत्वा पुरं दग्ध्वा तथा स्वयम्।
आगत्य रामाय स्वयं न्यवेदयत तत्त्वतः ॥ ४४ ॥

---

'सरामः' रामसहितः 'तस्य' बालिनः 'पत्तनं' नगरं 'जगाम' गतवान्। ततः 'अगर्जत्' सिंहनादं कृतवान् 'अनुजः' कनिष्ठः, बालिन इत्युभाभ्यां सम्बध्यते। 'वेगतः' वेगेन गृहात् जगाम, अगर्जच्चेत्यन्वयः। 'निर्जगाम' गृहान्निर्गतः ॥ ४०॥४१ ॥

'आशाविदः' दिक्कुशलान्। 'अधुना' शीघ्रं गच्छत, आशु मैथिलीमादाय अद्य ददत, 'श्व' आशु स्वरूपतो वा सन्देशतो वा श्व आदाय आशु ददतेत्यर्थः। श्वशब्द आश्चर्ये। ददत, श्व, आशु, इति पदच्छेदः।

'ततः' तदनन्तरं 'हनुमान्' ईशपुत्रः 'अब्धिं' समुद्रं 'ततार' तीर्णवान्, तीर्त्वा लङ्कां समाययौ। कथाविस्तरस्तु वाल्मीकीयाद्बोद्धव्यः ॥ ४२ ॥ ४३ ॥

अशोकवनिकायां सीतां दृष्ट्वा 'असुरान्' रक्षःकुमारादीन् हत्वा 'पुरं' लङ्कां पुच्छाग्निना दग्ध्वा तथा स्वयं रामं प्रति आगत्य रामाय 'स्वयं' स्वमुखेन तत्त्वतः 'न्यवेदयत' नितरां बोधितवान्। द्विःस्वयम्पदमादरातिशयार्थम् ॥४४॥

कृतं दैन्येन दुरितं पञ्च-मासर्त्तु-वर्षजम्।
स हरेत निःशेषन्तु चलाचलमिवाचलः॥ ४॥
ब्रह्महत्या-सहस्राणि ज्ञानाज्ञान-कृतानि च।
स्वर्णस्तेय-सुरापाण-गुरुतल्पायुतानि च॥ ५॥
कोटिकोटि-सहस्राणि उपपातकजान्यपि।
सर्वाण्यपि प्रणश्यन्ति राम-मन्त्रानुकीर्त्तनात्॥ ६॥
भूत-प्रेत-पिशाचाद्याः कुष्माण्ड-ग्रह-राक्षसाः।
दूरादेव प्रधावन्ति राममन्त्र-प्रभावतः॥ ७॥
ग्राम्यारण्य-पशुघ्नत्वे सञ्चितं दुरितञ्च यत्।
मद्यपानेन यत् पापं तदप्याशु विनाशयेत्॥ ८॥
अभक्ष्य-भक्षणोत्पन्नं मिथ्याज्ञान-समुद्भवम्।
सर्वं विलीयेत पापं राममन्त्रानुकीर्त्तनात्॥ ९॥
श्रोत्रियः स्वर्णहरणात् यच्च पापमुपस्थितः।
रत्नादे-र्वाथ हरणाज्जपेन तद्विनाशयेत्॥ १०॥
गत्वापि मातरं मोहादगम्याश्चैव योषितम्।
उपासितेन मन्त्रेण रामस्तदपि नाशयेत्॥ ११॥
महापातकया बध्वा सङ्कल्य सञ्चितञ्च यत्।
बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत्॥ १२॥
कृच्छ्रैः सप्त पराकाद्यैर्नानाचान्द्रायणैरपि।
पापं दुरपनोद्यं यत् तदप्याशु विनाशयेत्॥ १३॥
आत्मतुल्य-सुवर्णाद्यैर्दानैर्बहुविधैरपि।
एतदप्यपरिक्षीणं तदप्याशु विनाशयेत्॥ १४॥
अवस्थास्तु त्रयश्चैव मूलबन्धमघञ्च यत्।
तन्मन्त्र-स्मरणादेव न शेषं तत् प्रणश्यति॥ १५॥
तत्तद्गुरूपदिष्टेन वर्त्मनानुष्ठितञ्च यत्।
रामात्मा मनुरेवायं पापराशि-विनाशकृत्॥ १६॥

# हनुमदुक्त-रामोपनिषत्।

ओं सनकादयो योगीन्द्रा अन्ये च ऋषयस्तथा।
प्रह्लादाद्या विष्णुभक्ता हनुमन्तमिदं ब्रुवन्॥ १॥

आ ब्रह्मबीजदोषाच्च नाशयेत पृथक् तथा॥ १७॥
पितृ-मातृ-बधोत्पन्नं बुद्धिपूर्वमघञ्च यत्।
निःशेषं नाशयेत्त्वेव राममन्त्रानुकीर्त्तनात्॥ १८॥
पितृ-मातृ-स्वसृघ्नानां यद्वा विश्वास-घातिनाम्।
यद्वा बालबोधोत्पन्नं कृत्याः शस्त्रासुसायकम् '?'॥१९॥
गुरुपुत्र-कलत्रादि-वधोत्पन्नमघञ्च यत्।
तदनुध्यानमात्रेण सर्वमेतद्विलीयते॥ २०॥
यः प्रयागादि-तीर्थेषु सर्वेषु कुरुक्षेत्रादिषु।
सूर्य्य-नियमादि-क्रमाद् भूयः ० ० ० ०॥ २१॥
स्त्रीणाञ्च पुरुषाणां स्यान्मन्त्रेणानेन दोषतः॥ २२॥
येषु येषु विरोधेषु रामभद्रमुपासते।
दौर्बल्यादि-भयान्येषु न भवन्ति कदाचन॥ २३॥
शान्तः प्रसन्न वदनो अक्रोधो भक्तवत्सलः।
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते॥ २४॥
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम्।
ददात्यायुष्यमैश्वर्य्यमन्ते विष्णु-पदञ्च यत्॥ २५॥
तदेतदृचाभ्युक्तं तद्विष्णोः परमं पदम्॥ २६॥
स मुक्तो भवति, स मुक्तो भवति॥ २७॥

इत्याथर्वण-रहस्ये रामोत्तर-तापनीयोपनिषत् समाप्ता॥

पूर्वतापनीये साङ्गस्तारको वर्णितः। उत्तरतापनीये प्रणवस्यापि तारकत्वमुक्तम्, रामस्य परब्रह्मणः प्रणव-बीजा-

वायुपुत्र! महाबाहो! किं तत्त्वं? ब्रह्मवादिनाम्।
पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ २ ॥
चतुर्वेदेषु शास्त्रेषु सर्वाध्यात्म-विद्यासु च।
सर्वेषु विष्णुभिधानेषु विघ्न-सूर्य्येश-शक्तिषु ॥ ३ ॥
एतेषु मध्ये किं तत्त्वं कथय त्वं महाबल!।

हनुमानुवाच।

भो भो योगीन्द्रा ऋषयो विष्णुभक्तास्तथैव च ॥४॥

भ्यासश्च वाच्यत्वमुक्तम्। इदमिदानीं सन्दिह्यते, किं विघ्नराजादयः पञ्चापि तुल्यसामर्थ्या एव? आहोस्विदन्यतरस्मिन् विशेषोऽस्ति? किं श्रेष्ठं नाम? अथ के च रामस्याङ्गमन्त्राः? तथा प्रणवे गृहस्थ-ब्राह्मणानामधिकारोऽस्ति? उत यतीनामेवेति?। अधिकार-पक्षे कियांश्च प्रणवो जप्यः? कियांश्च षड़क्षरः? इति। विभीषणकृता रामस्तुतिश्च किमित्यप्रसिद्धा? कियता च पुरश्चरणेन परम-पुरुषार्थसिद्धिः? के च पुरश्चरणानुकल्पाः? इति। तदर्थं रामोपनिषदारभ्यते, ओं सनकादय इति।

अस्य अनुष्टुप्छन्दः। 'अन्ये च' नारदादयः, 'ब्रुवन्' अब्रुवन्, बहुलं छन्दसीत्यमाड्योगेऽप्यड्भावः। ब्रह्मवादिनामभिमतमिति शेषः। पुराणादिषु प्रतिपाद्यं किं तत्त्वं? सर्वेषु विष्णोः 'अभिधानेषु' नामसु मध्ये किं 'तत्त्वं'? श्रेष्ठं नाम?। 'विघ्नः' गणेश्वरः 'सूर्य्यः' आदित्यः 'ईशः' रुद्रः 'शक्तिः' चण्डी, प्रकृतत्वात् विष्णुश्च, एतेषु मध्ये किं 'तत्त्वं'? परमदैवतम्?।

शृणुत मामकीं वाचं भवबन्ध-विनाशिनीम् ।
एतेषु चैव सर्वेषु तत्त्वञ्च ब्रह्म तारकम् ॥ ५ ॥
राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम् ॥ ६ ॥

वायुपुत्रेणोक्ता योगीन्द्रा ऋषयो विष्णुभक्ताः पुनः पप्रच्छुर्हनुमन्तं, रामस्याङ्गान् नो ब्रूहि हनुमन् ! । स होवाच वायुपुत्रः, विघ्नं वाणीं दुर्गां चेत्रपालं सूर्य्यं चन्द्रं नारायणं नारसिंहं वासुदेवं वाराहम् अन्यांश्च कांश्चित् सर्वान् मन्त्रान् श्रीसीतां लक्ष्मणं हनुमन्तं शत्रुघ्नं विभीषणं सुग्रीवम् अङ्गदं जाम्बवन्तं प्रणवम् एतान् रामस्याङ्गान् जानीयात् । अङ्गान् विना रामो विघ्नकरो भवति ।

भो भो इत्यादरे वीप्सा । 'एतेषु' शास्त्रेषु तत्त्वं प्रतिपाद्यं, देवेषु तत्त्वं परमदैवतं, नामसु तत्त्वं सर्वाधिकफलं ब्रह्म तारकं, 'राम एव' श्रीराम एव तारकं ब्रह्म ।

राममन्त्रं जपता के चाङ्गमन्त्रा जप्तव्याः ? इति तृतीयं सन्देहं पृच्छन्ति, वायुपुत्रेणोक्ता इति । 'अङ्गान्' अङ्गस्थानीयान् मन्त्रान् देवांश्च ब्रूहि हे हनुमन् ! । 'वाणी' सरस्वती, विघ्नादयो वाराहान्ता दशाङ्गदेवताः, अन्यांश्च कांश्चि : वशिष्ठवामदेवादीन्, अन्येषामप्राधान्य-सूचनाय सामान्यशब्दप्रयोगः । श्रीबीज-पूर्विकां सीतां, सीताशब्दं चतुर्थ्यन्तं

पुनर्वायुपुत्रेणोक्तास्ते हनुमन्तं पप्रच्छुः। आञ्जनेय! महाबल! विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यात्? इति।

पुनरुवाच हनुमान्।

अयोध्यानगरे रम्ये समासीनो रामो मया पृष्टः, सीतापते! योगि-मानस-हंस! विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यात्? इति। स होवाच रामः। येषामेष षडक्षराधिकारो वर्त्तते, तेषां प्रणवाधिकारः स्यात्, नान्येषाम्।

---

स्वाहान्तं, सीतादयः प्रणवान्ता दश, एतान् रामस्य 'अङ्गान्' अङ्गमन्त्रान् जानीत। एषां प्रणवादि विन्दन्तमाद्यक्षरं वीजं. चतुर्थ्यन्तं नाम मन्त्रः। तदुक्तं डामरे।—

"ओङ्कार-विन्दु-मध्यस्थं नामधेयाद्यमक्षरम्।
देवतानां स्ववीजं तत् पूजायामृद्धि-सिद्धिदम्"॥ इति।

एतन्मन्त्रोल्लङ्घने बाधकमाह, अङ्गान् विनेति। विघ्नकारित्वे जप-पूजनादिकमेव न सिध्यति।

चतुर्थं संशयं पृच्छन्ति, आञ्जनेयेति। अञ्जनाया अपत्यम् आञ्जनेयः, तत् सम्बोधनम्। महाबलेति संशय-निराकरण-सामर्थ्यं सूचितम्। कथं स्यादिति यतीनामेव स्वातन्त्र्येण तदुपासन-विधानात्।

सीतापते! इत्यादि हनुमदुक्तं रामस्य सम्बोधनम्। येषामिति। गृहस्थ-साधूनां षडक्षराधिकारः सम्प्रतिपन्नः प्रणवस्याङ्गत्वात्, तत्समान-योगक्षेमः प्रणवाधिकारः, 'नान्येषां'

प्रणवं केवलम् अकारमकार मकारमर्द्धमात्रा-सहितं जपित्वा यो रामचन्द्रमन्त्रं जपते, तस्य शुभकरोऽहं स्यात् ; तस्मात् प्रणवस्य चाकारस्य चोकारस्य च मकारस्य चार्द्धमात्रस्य च ऋषि-च्छन्दो-देवताः तद्वत् वर्ण-चतुःस्थान-स्वर-वेदाग्नि-गुणादीन्युच्चार्य्य न्यासं कृत्वा प्रणवमन्त्रान् द्विगुणं जप्त्वा पश्चाद्राममन्त्रमाद्यन्त-प्रणवं यो जपते, स रामो भवेत्, इति रामेणोक्तम् ; तस्मात् रामाङ्गं प्रणवः कथित इति वायुपुत्रेणोक्ताः पुनर्हनुमन्तं पप्रच्छुः ।

स होवाच हनुमान् रामभक्त-विभीषणकृत-रामपरिचर्य्यायां सप्त सहस्राणि संस्कृतवाक्यानि,

षड़क्षरेणादौचितानाम् । प्रणवजपं विना राममन्त्रजपेऽधिकार एव नास्तीत्याह, प्रणवमिति । अकारादि-चतुरक्षर-सहितमिति वक्तव्यम् । अकारादिषु पृथग्विभक्त्युच्चारणं स्वातन्त्र्येण छन्दऋष्याद्यभिधान-सूचनार्थम् । तदेवाह, तस्मादिति । एषामर्थादयोऽथर्वशिरसि, माण्डूक्ये, नारसिंहे चोक्ताः । न्यासं कृत्वा प्रणवकलोक्त-मन्त्रान् षड़क्षरान्, 'आद्यन्त-प्रणवम्' आदौ अन्ते च प्रणवोऽस्य तं, प्रणव-पुटितमित्यर्थः, 'जपते' जपति । उपसंहारः, तस्मादिति । इत्यमृतकल्पे उक्ताः । पुनः पञ्चमं संशयं पप्रच्छुरित्यन्वयः ।

रामस्य भक्तो यो विभीषणः, तेन कृता 'रामपरिचर्य्या'

सप्त सहस्राणि गद्यानि, पञ्चशतान्यार्य्याः, अष्टौ सहस्राणि श्लोकाः, चतुर्विंशति-सहस्राणि पद्यानि, दश सहस्राणि दण्डकाः, इत्येवमनुक्रमं ज्ञात्वा कृतकृत्यो भवेदिति। इति हनुमदुपनिषत्।

प्रथमः खण्डः॥ १॥

हनुमानुवाच।

सिंहासने समासीनं रामं पौलस्त्यसूदनम्।
प्रणम्य दण्डवद्-भूमौ पौलस्त्यो वाक्यमब्रवीत्॥७
रघुनाथ! महाबाहो कैवल्यं कथितं मया।
अज्ञाना-सुलभञ्चैव कथनीयञ्च सौलभम्॥ ८॥

रामस्तुतिः, मा विस्तरतः सम्प्रति श्रोतुमशक्या बहुत्वात्, उद्देशतस्तु वच्यामीत्याशयेनाह, स होवाचेति। 'गद्यानि' संस्कृत-प्राकृत-साधारणानि, 'आर्य्या' गणच्छन्दः, 'श्लोकाः' वृत्तानि 'पद्यानि' अनुष्टुप्प्रायाः, 'दण्डका' षड्विंशत्याद्यक्षरपादाः। ननु उद्देशमात्रेण तदर्थाज्ञानात् फलासम्बन्धः? इत्याशङ्क्य फलमाह, इत्येवमिति। उद्देशेन अनुक्रमो ज्ञातः, तावतापि कृतार्थो भवेदित्यर्थः। इति हनुमदुक्तं रहस्यज्ञानम्। अति-विस्तृतत्वात् सा न सर्वजनप्रसिद्धेति भावः।

षष्ठं सन्देहं निरस्यति, हनुमानुवाचेति।

'पौलस्त्यः' पुलस्त्यापत्यं रावणः तस्य 'सूदनं' निरसितारम्; सूद निरसने। 'पौलस्त्यः' विभीषणः। कैवल्यमिति। यन्मया संस्कृतवाक्यादिषु कैवल्यं 'कथितं' निरूपितं, तत् 'अज्ञानानाम्'

श्रीराम उवाच।

अथ पञ्च दण्डकाः, पितृघ्नो मातृघ्नो जारो गुरुहानेककोटि-यतिघ्नोऽनेक-कृतपापो यो मम षण्णवति-कोटि-नामानि जपते, स तेभ्यः पापेभ्यः प्रमुच्यते; स्वयमेव सच्चिदानन्दस्वरूपो भवेन्न किम्?।

पुनरुवाच विभीषणः। तत्राप्यशक्तो यः, स किं करोति?। स होवाच रामः। पञ्चाशल्लक्ष-मन्मन्त्र माद्यन्त-प्रणवं मन्मन्त्राद्द्विगुणः प्रणवो यो जपते, स स्वयमेवाहं भवेन्न किम्?। पुनरुवाच कार्कशेयः। तत्राप्यशक्ता ये, ते किं कुर्वन्तीति। स होवाच रामः। अथ त्रीणि पद्यानि पुरश्च-

अज्ञातबुद्धीनाम् 'असुलभं' दुष्प्रापं, च शब्दो हेतौ, ततः 'सौलभं' सुलभस्य ज्ञानस्य इदं कारणं सौलभं सुलभज्ञान-प्राप्तिसाधनं त्वया कथनीयमिति प्रार्थितो राम उवाच।

'अथ' शब्दः पक्षव्यावृत्त्यर्थः। पञ्च दण्डकाः पठनीयाः विभीषणोक्त-दशसहस्रेभ्य उद्धृत्य पञ्च पठनीयाः। 'जारः' गुरुतल्पगः, चतुर्न्यून-शतकोटिनामानि रामेत्यादीनि। सच्चि-दानन्दरूपः स्वयमेव किं न भवेत्? अपि तु भवेदेव। इदं मुख्यं पुरश्चरणम्।

सप्तमं सन्देहं निरस्यन् अनुकल्पान् प्रश्नपूर्वकमाह, पुनरिति। इति। मन्मन्त्रं यो जपते इत्यन्वयः। मन्मन्त्राच्च द्विगुणः प्रणवो

रणानि, तत्राप्यशक्तो यो मम गीता मन्नामसहस्रं मद्विश्वरूपं मदष्टोत्तर-शताभिधानं नारदोक्तं स्तवराजं हनुमदुक्तं मन्त्रराजात्मक-स्तवञ्च सीता-स्तवञ्च राम! इत्यादिभिः स्तवैरेतैर्यो मां नित्यं स्तौति, स मत्सदृशो भवेन्न किम् इति।

द्वितीयः खण्डः ॥ २ ॥

इत्याथर्वण-रहस्ये रामोपनिषत् समाप्ता ॥ २४ ॥

## सर्वोपनिषत्सारः।

ओँ कथं बन्धः कथं मोक्षः काऽविद्या का विद्येति जाग्रत्-स्वप्न-सुषुप्तं तुरीयञ्च कथम् अन्न-

---

जप्तव्य इति शेषः। स स्वयमेव 'अहं' रामः किं न भवेत् ?। पद्यान्तरं पुनरिति। कर्कशाया अपत्यं कार्कशेयः। त्रीणि 'पद्यानि' श्लोकाः, गीतादीन्यष्ट।

नारायणेन रचिता श्रुतिमात्रोपजीविना।
अस्पष्ट-पद-वाक्यानां रामोपनिषद्दीपिका ॥

इति श्रीभट्टरत्नाकरसूनु-भट्टनारायण-विरचिता
श्रीरामोपनिषदो दीपिका सम्पूर्णा ॥ २४ ॥

ओँ बन्धादिमायापर्य्यन्तं लक्षणं तैत्तिरीयके।
सर्वोपनिषदां सारः सप्तत्रिंशे चतुर्दशे ॥ १ ॥

त्रयोविंशते-रर्थानामादौ स्वरूप-लक्षणप्रश्ने बन्धस्वरूपं

मयः प्राणमयो मनोमय आनन्दमयः कथं कर्त्ता जीवः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्य्यामी कथं प्रत्यगात्मा परमात्मा आत्मा माया चेति कथमात्मेश्वरः। अनात्मनो देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः; तस्मिन् निवृत्तिर्मोक्षः तमभिमानं कारयति या, साऽविद्या; सोऽभिमानो यया निवर्त्तते, सा विद्या; मन आदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन् विषयान् स्थूलान् यदोपलभते, तदात्मनो जागरणम्।

तद्वासनारहितश्चतुर्भिः करणैः शब्दाद्यभावे-

---

तावदाह, आत्मेश्वर इति। अनात्मनः स्थूलत्वात् देहेन्द्रियादीन् 'आत्मत्वेन' ब्राह्मणोऽहं, स्थूलोऽहं, गच्छामीत्यात्मत्वेनाभिमन्यते, सोऽभिमानो बन्धः; तत्त्यागो मोक्षः; तत्कारिका अविद्या; तन्निवर्त्तिका विद्या। मन आदीति, मनो-बुद्धि-चित्ताहङ्कार-श्रोत्र-त्वक्-चक्षूरसना-घ्राण-वाक्-पाणि-पाद-पायूपस्थाख्यैर्ज्ञान-कर्मकरणैः 'पुष्कलैः' वहिराविर्भूतैश्चन्द्राच्युत-शङ्कर-चतुर्मुख-दिक्-वातार्क-प्रचेतोऽश्वि-वह्नीन्द्रोपेन्द्र-मित्र-ब्रह्मभिरनुगृहीतैः सङ्कल्पाध्यवसाय-चेतनाभिमान-शब्द-स्पर्श-रूप-रस-गन्ध-वक्तव्यादानगमनविसर्गानन्दान् स्थूलान् वहिर्भूतान् यदोपलभते, तदा आत्मनो जाग्रद् व्यवहारः।

तद्वासनारहित इति। देवतानिमित्ते अदृष्टनिमित्ते च

ऽपि वासनामयान् शब्दादीन् यदोपलभते तन्मनः स्वप्नम्। चतुर्दशकरणोपरमाद्विषय-विशेष-विज्ञानाभावात् यदा, तदा आत्मनः सुषुप्तम्। अवस्थात्रयाभावाद्-भावसाक्षि स्वयं भावरहितं नैरन्तर्य्यं चैतन्यं यदा, तदा तत्तुरीयं चैतन्यमित्युच्यते।

अन्नकार्य्याणां षण्णां कोशानां समूहोऽन्नमयः कोश इत्युच्यते। प्राणादि-चतुर्दश वायु-भेदा

---

स्वप्न इति बोद्धव्यम्, चिन्तास्वप्ने वासनाया निमित्तत्वात्; अतएव वासनामयानित्युक्तम्। अरहित इति वा च्छेदः। दैवताद्दृष्टकृते तु वासनाद्वये वासनाशब्देन दैवेच्छा धर्माधर्मौ च व्याख्येयौ। तन्मनःस्वप्नमिति। सा मनोवृत्तिः स्वप्न इत्यर्थः। तदा आत्मनः स्वप्नमिति तु युक्तः पाठः जागरण-सुषुप्त्योरात्मशब्दग्रहणात्। चतुर्दशेति, स्वप्ने तु दशानामेवोपरमः, चतुर्णामन्तःकरणानां व्यापारः करणाभावे विषयाणां शब्दादीनां विशेषतो ज्ञानाभावात् यदा आत्मनोऽवस्थानमिति शेषः, तदा आत्मनः 'सुषुप्तं' सुषुप्तिरित्यर्थः। तन्मनः सुषुप्तमिति क्वचित् पाठः, तदा तन्मनः सुषुप्तम् उपरम इति व्याख्येयम्। 'भावसाक्षि' भावानां साक्षि साक्षाद्द्रष्टृ, साक्षिशब्दः साक्षाद्द्रष्टृवाची, स्वयं भावरहितं निर्लेपत्वात्, 'नैरन्तर्य्यं' स्वार्थे भावप्रत्ययः, व्यवधायक-वस्त्वन्तर-रहितं 'चैतन्यं' ज्ञानमात्रं यदा अवतिष्ठते इति शेषः, तदा तुरीयम्।

अन्नेति। षट्कोशा यथा—

"अस्थि मज्जा मेद-त्वङ्मांस-शोणितम्।

अन्नमये कोशे यदा वर्त्तन्ते, तदा प्राणमयः कोश इत्युच्यते। एतत्कोशद्वयसंयुक्तो मन आदिभिश्चतुर्भिः करणैरात्मा शब्दादिविषयान् सङ्कल्पादिधर्म्मान् यदा करोति, तदा मनोमयः कोश इत्युच्यते। एतत्-कोशत्रय-संयुक्तास्तद्गत-विशेषाविशेषज्ञो यदा भासते, तदा विज्ञानमयः कोश इत्युच्यते। एतत् कोशचतुष्टय स्वकारण-विज्ञाने वटकणिकायामिव वृक्षो यदा वर्त्तते, तदा आनन्दमयः कोश इत्युच्यते।

षट्कोशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम्" ॥ इति।

प्राणादिचतुर्दशेति। प्राणापान-व्यानोदान-समान-नाग-कूर्म्म-कृकर-देवदत्त-धनञ्जया दश, चत्वारोऽन्ये,—

वैरम्भणः स्थानमुख्यः प्रद्योतः प्रकृतस्तथा।
"वैरम्भणादयस्तत्र सर्ववायु-वशङ्गताः" ॥ इति।

एते चतुर्दश वायवो देहे यदा कृतास्पदाः, तदा प्राणमयः कोशः। एतदिति, 'एतौ' अन्नमय-प्राणमयौ कोशौ, तयोर्द्वयं, तेन संयुक्तः आत्मा 'शब्दादिविषयान्' शब्दादयः पञ्च विषया येषां ते तान्, सङ्कल्पादयो ये धर्म्मास्तान्। एतदिति, 'एतन' पूर्वोक्त-कोशत्रयेण संयुक्तः 'तद्गत-विशेषा-विशेषज्ञः' तद्गत सङ्कल्पादिगतः विशेषः ब्राह्मणत्वादिः, 'अविशेषः' मनुष्यत्वादि-सामान्यं, तयोर्ज्ञाता, स विकल्प-कल्पनादिमान्, 'स्वकारण-विज्ञाने' स्वस्य कारणीभूतं यदा एतत् कोशचतुष्टयं ... ज्ञानं ब्रह्म तत्र वर्त्तते। तत्र दृष्टान्तः, वटबीजे यथा

सुख-दुःख-बुद्ध्याश्रयो देहान्तःकर्त्ता यदा, तदा इष्टविषये बुद्धिः सुखबुद्धिः, अनिष्टविषये बुद्धिर्दुःखबुद्धिः, शब्दस्पर्श-रूप-रस-गन्धाः सुख-दुःख-हेतवः।

पुण्य-पाप-कर्म्मानुसारी भूत्वा प्राप्त-शरीर-सम्बन्ध-वियोगम् अप्राप्तशरीर-संयोगमिव कुर्वाणो यदा दृश्यते, तदोपहितत्वाज्जीव इत्युच्यते।

वटो वर्त्तते तद्वत्, स च निर्विषये जाग्रति मनसि सुषुप्त च भवति।

कर्तृलक्षणमाह, सुखेति। सुखं मे भवतु, दुःखं मे मा भूदिति प्रवृत्तः सुख-दुःखयोरनुभविता देहान्तः स्थूल-सूक्ष्म-देहोपाधिः कर्त्तेत्यर्थः। यदा तदेति पूर्वेण सम्बध्यते; यदा देहोपाधिस्तदा कर्त्तेत्यर्थः।

सुख-दुःखबुद्ध्योर्लक्षणे लक्षणाङ्गतया आह, इष्टेति। इष्टानिष्ट-विषयानाह, शब्देति। अनुकूलवेद्याः सुखहेतवः, प्रतिकूलवेद्या दुःखहेतवः।

सुख-दुःख-हेतून् निदर्शयन् जीवलक्षणमाह, पुण्येति। पुण्य-पापानुसारित्वं ज्ञान-संस्कारयोरप्युपलक्षणम्, "तमेनं विद्या-कर्म्मणी समन्वारभते पूर्वप्रज्ञा च" इति श्रुतेः। प्राप्तस्य शरीरस्य यः सम्बन्धः, तस्य वियोगमिव कुर्वाणः अप्राप्तस्य शरीरस्य संयोगमिव शब्दो वस्तुतोऽसङ्गत्वात्। 'उपहितत्वात् नाना-शरीरोपाधिमत्त्वात् जीव इत्युच्यते। प्राप्त-शरीर-सन्धि-योगमिति पाठे प्राप्तः शरीर-योग-सन्धिः येन सः। एकशरीर-

मन आदिश्च, प्राणादिश्च, सत्त्वादिश्च, इच्छादिश्च, पुण्यादिश्चैते पञ्च वर्गा इति ।

एतेषां पञ्चवर्गाणां धर्मीभूतात्मज्ञानादृते न विनश्यति । आत्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृदयग्रन्थिरित्युच्यते ।

तत्र यत् प्रकाशते चैतन्यं, स क्षेत्रज्ञ इत्युच्यते । ज्ञातृ-ज्ञान-ज्ञेयानामाविर्भाव-तिरोभाव-

---

त्यागेन अपर-शरीर-ग्रहणम् । सन्धिर्योगमित्यस्यैव व्याख्यानम् अप्राप्त-शरीर-संयोगमिति ।

क्षेत्रज्ञं लक्षयितुं लिङ्गं लिलक्षयिषुः पञ्च वर्गानाह, मन आदिरिति । मनो बुद्धिश्चित्तमहङ्कारश्च ; 'प्राणादिः' पञ्च वायवः ; 'सत्त्वादिः' त्रयो गुणाः ; 'इच्छादिः' कामः सङ्कल्पो विचिकित्सा, श्रद्धाऽश्रद्धा, धृतिरधृतिर्ह्रीर्धीर्भीश्च ; 'पुण्यादिः' पुण्यपाप-ज्ञान-संस्काराः ; पञ्च एते वर्गाः, 'इति' वाक्य-समाप्तौ ।

लिङ्गस्य मन आदिसन्धिमाह, एतेषामिति । 'धर्मीभूतात्मज्ञानात्' भूतसिद्धो य आत्मा, तस्य ज्ञानं विना न नश्यति, आत्मज्ञाने तु नश्यति "भिद्यते हृदयग्रन्थिः" इत्यादि-श्रुतेः ।

इदानीं लिङ्गलक्षणान्तर्भूतमात्मान्तरमाह, आत्मसन्निधाविति । आत्मनो नित्यत्वधर्माध्यासात् नित्य इव भासमान इति स्वरूपकथनम्, एवंविधो य आत्मोपाधिः, तस्य द्वे सञ्ज्ञे, लिङ्गं हृदयग्रन्थिरिति च ।

यदर्थं लिङ्गलक्षणमुक्तं, तल्लक्षणमाह, तत्रेति । 'ज्ञाता'

ज्ञाता स्वयमेव-माविर्भाव-तिरोभाव-हीनः स्वयं ज्योतिः, स साक्षीत्युच्यते। ब्रह्मादि-पिपीलिका-पर्य्यन्तः सर्वप्राणि-बुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणि-बुद्धिस्थो यदा, तदा कूटस्थ इत्यु-च्यते। कूटस्थाद्युपहितभेदानां स्वरूप-लाभ-हेतुर्भूत्वा मणिगणसूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशते आत्मा, तदान्तर्यामीत्युच्यते। सर्वोपाधि-विनिर्मुक्त-सुवर्णघनवद्विज्ञानचिन्मात्र-स्वभाव आत्मा यदावभासते, तदा त्वं पदार्थः प्रत्यगात्मेत्युच्यते।

---

प्रमाता, 'ज्ञानं' चित्तवृत्तिः, 'ज्ञेयाः' विषयाः, तेषामुत्पत्ति-विलयौ जानाति स्वयमेवं ज्ञात्रादिवत् यस्य तौ नस्तः, किन्तु निर्विकारः, स्वप्रकाशश्च, स 'साक्षात्' अव्यवधानेन तद्द्रष्टृत्वात् साक्षीत्युच्यते। 'अविशिष्टतया' विशेष-रहित चेतनाकारेण सर्वप्राणिबुद्धिस्थः ध्यायतीव लेलायतीव सुधीरिति श्रुतेः, 'कूटे' बुद्ध्यादौ मिथ्याभूते तिष्ठति कूटस्थः, कूटस्थादयो ये उपहिताः 'भेदाः': उपाधियुक्ता विशेषाः, तेषां स्वरूपलाभं प्रति हेतुः सन् मणिगुच्छस्थसूत्रवत् सर्वशरीरेष्वनुगतत्वेन यदा भात्यात्मा तदान्तर्यामि-सञ्ज्ञो भवति। तदुक्तम्—

"अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" ॥ इति।

सत्यं ज्ञानमनन्तमानन्दं ब्रह्म, सत्यमविनाशि, नाम-देश-काल-वस्तु-निमित्तेषु विनश्यत्सु यन्न विनश्यति, तदविनाशि ज्ञानमिति उत्पत्ति-विनाश-रहितं चैतन्यं ज्ञानमित्यभिधीयते। अनन्तं नाम मृद्विकारेषु मृदिव, सुवर्णविकारेषु सुवर्णमिव, तन्तुकार्य्येषु तन्तुरिव, अव्यक्तादि-सृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्यमनन्तमित्युच्यते। आनन्दो नाम सुखचैतन्य-स्वरूपोऽपरिमितानन्द-समुद्रः।

अविशिष्ट-सुख-स्वरूपश्च आनन्द इत्युच्यते।

---

त्वम्पदार्थः शोधित इति शेषः, न ह्यशोधिते त्वम्पदार्थे सर्वोपाधि-विनिर्मुक्तत्वादि-विशेषण-सम्भवः।

परमात्मानं तत्पदार्थं वक्तुं ब्रह्मणो रूप-चतुष्टयमाह, सत्यमिति। चतुष्टयं क्रमेण लक्षयति, सत्यमविनाशीति। अविनाशीत्यस्य कोऽर्थः? इत्यत आह, नामेति। नामादिपञ्चसु नष्टेष्वपि यत् तत्त्वं स्थिरं, तदविनाशि ज्ञातव्यमिति शेषः। ज्ञानपदार्थमाह, ज्ञानमितीति। आद्यं ज्ञानपदं प्रतीकम्, उत्तरमर्थनिर्देशः। एवमनन्तानन्दयोरपि द्रष्टव्यम्। 'पूर्वं' कार्य्यात् प्राग्-वर्त्तमानं कार्य्यजातस्य च व्यापकं रूपाच्छादकं शुक्तिरिव रजत-व्यापिका। सुखेति, सुखात्मकं यच्चैतन्यं तद्रूपः, न तु ज्ञानाद्भिन्नं सुखमस्ति। तस्य निरवधितामाह, अपरिमितेति। दृष्टिसुखं श्रोत्रसुखमितिवत्।

विशेषोऽत्र नास्तीत्याह। अविशिष्टेति। लक्षणमिति।

एतद्वस्तुचतुष्टयं यस्य लक्षणं देश-काल-निमित्ते-ष्वव्यभिचारि, स तत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते। त्वंपदार्थादौपाधिकात् तत्पदार्थादौपाधिकाद् विलक्षणः आकाशवत् सूक्ष्मः केवलः सत्तामात्रस्तत्पदार्थस्यात्मेत्युच्यते।

अनादिरन्तर्वत्नी प्रमाणाप्रमाण-साधारणा, न सती, नासती, न सदसती, स्वयमविकारा-

एतच्चतुष्टयं रूपमित्यर्थः। 'अव्यभिचारि' सदोपलभ्यमानं यद्रूपं, स तत्पदार्थ ईश्वर इत्युच्यते। तस्यैव पुनर्नामद्वयमाह, परमिति। परमित्युभयत्राप्यव्ययम्। तत्त्वं पदलक्षितमर्थं लक्षयति, त्वम्पदार्थादिति। अतत्पदार्थश्च तत्पदार्थादौपाधिकाद्विलक्षण इत्यर्थः। 'आत्मा' शुद्धं ब्रह्मेत्यर्थः।

मायालक्षणमाह, अनादिरिति। 'अनादिः' पूर्वावधिविधुरा, 'अन्तर्वत्नी' गर्भिणी कार्य्योत्पादन समर्था। अन्तवतीति पाठे कार्य्य-रूपेण नश्वरा, चिद्रूपेण कारणात्मना तु नित्यैव शक्ति शक्तिमतोरभेदात् चिच्छक्तित्वाच्चास्याः कदाचिदपि ब्रह्मणो जगज्जननाद्यसामर्थ्यासम्भवात् स्वभावहानिप्रसङ्गात् प्राग्ज्ञानात् सत्त्वात् सास्तेति सम्प्रदायविदः।

प्रमाणेति। उभयोरतत्त्व-विषयत्वात् ब्रह्मणः स्वप्रकाशत्वेन प्रमाणाविषयत्वात् 'न सती' ब्रह्मातिरेकेण 'नासती' उपलम्भविरोधात्, 'न सदसती' विरोधात्, किन्तु सदसद्विलक्षणानिर्वचनीया ज्ञानबाध्या इति साम्प्रदायिकाः। वयन्तु ब्रूमः ब्रह्मरूपेण सती, कार्य्यरूपेणासती; तेन सर्वात्मना सती,

द्विकारहेतौ निरूप्यमाणे असती, अनिरूप्यमाणे सती, लक्षणशून्या, सा मायेत्युच्यते ।

इत्यथर्ववेदे सर्वोपनिषत्सारः समाप्तः ॥ २५ ॥

—०—

## हंसोपनिषत् ।

गौतम उवाच ।

भगवन् सर्वधर्मज्ञः सर्वशास्त्रार्थपारगः ।
ब्रह्मविद्या-प्रबोधो हि केनोपायेन जायते ? ॥१॥

---

नाप्यसती, नापि सदसती, सद्रूपेणासत्त्वाभावात् असद्रूपेण सत्त्वाभावात्, एतदुपपादितम् अधस्तात् स्वयमधिष्ठानस्य ब्रह्मणोऽविकारात् विकारहेतौ निरूप्यमाणे 'असती' आत्मानमदर्शयन्ती ब्रह्मातिरेकेणानुपलभ्यमाना 'अनिरूप्यमाणे' अविवेक-दशायां 'सती' स्वकार्यं दर्शयन्ती 'लक्षणशून्या' ईदृशी तादृशीति निर्वक्तुमशक्या सा माया । माशब्दो निषेधे, याशब्दः प्राप्तौ, प्राप्तापि सती या नास्ति, सा माया ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्ट-पद-वाक्यानां सर्वोपनिषद्दीपिका ॥
इति सर्वोपनिषत्सारस्य दीपिका सम्पूर्णा ॥ २५ ॥

श्रीं हंसोपनिषदं विद्यादष्टत्रिंशत्तमीं ततः ।
आथर्वणे चतुःखण्डां हंसज्ञान-पटीयसीम् ॥ १ ॥
शाश्वतो ब्रह्मणि ज्ञाते सति तत्साक्षात्-कारायोपाय उप-

सनत्सुजात उवाच।

विचार्य्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः।
पार्वत्या कथित तत्त्वं शृणु गौतम! तन्मम ॥२॥
अनाख्येयमिदं गुह्यं योगिनां कोश-सन्निभम्।
हंसस्यागति-विस्तारं भुक्ति-मुक्ति-फल-प्रदम् ॥३॥

अथ हंस-परमहंस-निर्णयं व्याख्यास्यामः, ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय हंस हंसेति सदा अयं सर्वेषु देहेषु व्याप्तो वर्त्तते, यथा ह्यग्निः काष्ठेषु, तिलेषु तैलमिव। तं विदित्वा न मृत्युमेति। गुदमवष्टभ्य आधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकञ्च गत्वा अनाहतमतिक्रम्य विशुद्धौ प्राणान् निरुध्य आज्ञामनुध्यायन् ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येव सर्वदा ध्यायन्। अथो

---

दिश्यते। तत्रापि प्रामाण्य-दार्ढ्याय आख्यायिकारभ्यते, भवत्विति। ब्रह्मविद्यायाः प्रबोधः "आदिक्षान्त-दलस्थार्णान् संहरेत् कमलासनः" इत्यादि कुण्डल्यनुसारेण वायोरपि चोर्द्ध्वं गच्छतः त्रिः परिवृत्तिः, 'मणिपूरकं' नाभिचक्रं 'गत्वा' प्राप्य 'अनाहतम्' अनाहतचक्रं हृदि चक्रम् 'अतिक्रम्य' उल्लङ्घ्य 'विशुद्धौ' कण्ठदेशे 'प्राणान्' वायून् निरुध्य 'आज्ञाम्' आज्ञाचक्रं भ्रूमध्यवर्त्ति अनुध्यायन् ब्रह्मरन्ध्रञ्च सहस्रदलपङ्कजे

नादमाधाराद्-ब्रह्मरन्ध्र-पर्य्यन्तं शुद्धस्फटिक-सङ्काशं स वै ब्रह्म परमात्मेत्युच्यते ॥ १ ॥

अथ हंसऋषिः पङ्क्तिच्छन्दः परमहंसो देवता-ऽहमिति बीजं स इति शक्तिः सोऽहमिति कीलकं षट्सङ्ख्यया अहोरात्रयोरेक-विंशति सहस्राणि षट्शतान्यधिकानि भवन्ति। सूर्य्याय सोमाय निरञ्जनाय निराभासाय तनु सूक्ष्म

---

ध्यायन् 'त्रिमात्रः' ओङ्कारः अहमित्येव 'सर्वदा' नित्यं ध्यायन्। अथो नादं ध्यायन्, कीदृशं? 'आधारात्' आधार-मारभ्य ब्रह्मरन्ध्रपर्य्यन्तं प्रतीयमानं तथा उज्ज्वलं स वै ब्रह्म आत्मा परमात्मैव ॥ १ ॥

हंसमन्त्रस्य ऋष्यादिकमाह, अथ हंस इति। अन्यत्र तु भिन्ना ऋष्यादय उक्ताः, यथा,—

"ऋषिर्ब्रह्मा स्मृतो देवी गायत्रीच्छन्द ईरितम्।
देवता जगतामादिः सम्प्रोक्तो गिरिजापतिः" ॥ इति।

तत् हंसस्य वाह्यपुरश्चरण-विषयं ज्ञातव्यम्। षट्सङ्ख्यया ऋष्यादयो ज्ञेया इति शेषः। यद्वा 'षट्शतानि' षट्सङ्ख्यया अधिकानि भवन्तीन्वयः, षट्शतोपरि षट् इत्यर्थः। २१६०६ इत्यङ्कतः। अमृतविन्दौ तु—

"अशीतिः षट्शतञ्चैव सहस्राणि त्रयोदश।
लक्षश्चैकोऽपि निश्वासा अहोरात्र-प्रमाणतः" ॥ इति
सङ्ख्याभेद उक्तः, स तत्रैव समाहितः।

षड़ङ्गान्याह, ओं सूर्य्याय हृदयाय नमः, ओं सोमाय शिरसे स्वाहा, ओं निरञ्जनाय शिखायै वषट्, ओं निराभासाय

प्रचोदयादिति, अग्नीषोमाभ्यां वौषट्, हृदया- द्यङ्गन्यास-कराङ्गन्यासौ भवतः एवं कृत्वा हृदये अष्टदले हंसात्मानं ध्यायेत्।

अग्नीषोमौ पक्षावोङ्कारः शिरो विन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चा- ग्निश्चोभे पार्श्वे भवतः। पश्यत्यनागारश्च शिष्टो- भयपार्श्वे भवतः।

एषोऽसौ परमहंसो भानुकोटि-प्रतीकाशः

---

कवचाय हुं, ओं तनु सूक्ष्म नेत्रत्रयाय वौषट्, ओं प्रचोदयात् अस्त्राय फट्। एभिरेवादौ करन्यासः। हसां हसौमित्यादिना षड़ङ्गानीत्यपरे। हसां सूर्य्यात्मने हृं, हसीं सोमात्मने शिर इत्यादिनेत्यन्ये। अग्नीषोमाभ्यां वौषड़िति षस्मां शेषः। 'हस्' अग्निः 'सः' सोमः "हं पुमान् प्रकृतिस्तु सः" इति चोक्तम्। हृदयादीनि यानि अङ्गानि तेषां न्यासः करन्यासश्च तौ भवतः। एवं न्यासं कृत्वा हृदये अष्टदलं, तत्र हंसात्मानं ध्यायेत्।

ध्येयस्वरूपमाह, अग्नीषोमाविति। हंसस्य पक्षित्वात् पक्षिरूपेण ध्यानं ताभ्यां जगत् प्रवृत्तेः। ओङ्कारः शिरः उत्तमा- ङ्गत्वात्, विन्दुस्तु नेत्रं प्रकाशकत्वात्, मुखं रुद्रो वक्तृत्वात्, रुद्राणी चरणौ सर्वाधारत्वात्, बाहू कालश्च सर्वदातृत्वात्, अग्निश्चोभे पार्श्वे भवतः पूर्वापरे दक्षिणोत्तरे वासौ सत्वसामा- न्यात्, 'पश्यति' दृशधातुः लक्षणया ज्ञानम्, 'अनागारः' अनिकेतः वैराग्यं, ते अवशिष्टे उभयपार्श्वे भवतः पूर्वापरे दक्षिणोत्तरे वा।

ध्यानमुपसंहरति, एषोऽसाविति। तस्याष्टसु दलेषु स्थितस्य

येनेदं व्याप्तम्, तस्याष्टधा वृत्तिर्भवति। पूर्वदले पुण्ये मतिः, आग्नेय्यां निद्रालस्यादयो भवन्ति, याम्ये क्रूरे मतिः, नैरृते पापे मनीषा, वारुण्यां क्रीड़ा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ईशाने द्रव्यादान मध्ये वैराग्यं,

---

अष्टधा वृत्तिमाह, तस्येति। तत्र दिक्पाल-बुद्ध्यनुसारेण फलं बोद्धव्यम्। इदञ्च दिगभिप्रायेण सामान्यतः फलमुक्तम्, तत्तद्दलाभिप्रायेण तु विशेषफलमध्यात्मविवेके उक्तम्, तद्यथा—

गुद-लिङ्गान्तरे चक्रमाधारन्तु चतुर्दलम्।
परमः सहजस्तद्वदानन्दो वीरपूर्वकः॥
योगानन्दश्च तस्य स्यादीशानादिदले फलम्।
स्वाधिष्ठान-लिङ्गमूले षट्पत्रं चक्रमस्य तु॥
पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात्।
प्रश्रयः क्रूरता गर्व नाशो मूर्च्छा ततः परम्॥
अवज्ञा स्यादविश्वासो जीवस्य चरतो ध्रुवम्।
नाभौ दशदलं पद्मं मणिपूरक-सञ्ज्ञकम्॥
सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा।
लज्जाभय-घृणा-मोह-कुधियोऽथ विषादिता॥
हृदयेऽनाहतं चक्रं दलैर्द्वादशभिर्युतम्।
लौल्य-प्रणाशः कपटं वितर्कोऽप्यनुतापिता॥
आशाप्रकाशश्चिन्ता च समीहा समता ततः।
क्रमेण दम्भो वैकल्यं विवेको हुङ्कृतिस्तथा॥
फलान्येतानि पूर्वादि-दलस्थस्यात्मनो विदुः।
कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोड़शच्छदम्॥

केशरे जाग्रदवस्था, कर्णिकायां स्वप्नं, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयं, यदा हंसो नादे लीनो भवति, तदा तुर्य्यातीतमुन्मननमजपोपसंहार-मित्यभिधीयते।

एवं सर्वं हंसवशात्; तस्मान्मनो हंसो विचार्य्यते; स एव जपकोट्या नादमनुभवति; एवं सर्वं हंसवशात्।

---

तत्र प्रणव उद्गीथ हुं फड्वषड्थ स्वधा।
स्वाहा नमोऽमृतं सप्तस्वराः षड्जादयो मताः॥
इति पूर्वादिपत्रस्थे फलान्यात्मनि षोड़श" ॥ इति ॥३॥

स्थानान्तरेषु नियममाह, मध्य इति। 'लिङ्गे' नाले 'पद्मत्यागे' पद्मादूर्द्धं निरालम्ब-प्रदेशे 'नादे' वक्ष्यमाणे 'तुर्य्यातीतं' तुरीयात्परम्, 'उन्मननम्' मनन रहितम् 'अजपोपसंहारं' प्राणव्यापार-रहितम्। त्रय एते पर्य्यायाः।

एवं सर्वमित्यादि। 'एवं' तुरीयातीतपर्य्यन्तमुक्तं सर्वं फलं 'हंसवशात्' हंसजप-निवेदनाधीनं वेदितव्यम्। 'तस्मात्' सर्वफलदत्वात् मनो 'हंसः' हन्ति गच्छति हंसः सप्तदशकं लिङ्गं मनो विचार्य्यते मनःस्वरूपमेव विचार्य्य निश्चेतव्यम्, येन त्वमर्थोऽवभासते, 'स एव' हंसोपासकः 'जपकोट्या' कोटिसङ्ख्यकजपनिवेदन-पूर्वकमनो-नियमे सति नादं वक्ष्यमाणम् अनुभवति। तस्यैवेति पाठे हंसस्यैव, पुनरेवमित्यादिरुपसंहारः नादहेतुत्वस्याधिकस्योक्तत्वात्।

नादो दशविधो जायते। चिणीति प्रथमं, चिञ्चिणीति द्वितीयं, घण्टानादस्तृतीयः, शङ्ख-नादश्चतुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्ताल-नादः, सप्तमो वेणुनादः, अष्टमो मृदङ्गनादः, नवमो भेरीनादः, दशमो मेघनादः ; नवमं परित्यज्य दशममेवाभ्यसेत्।

प्रथमे चिञ्चिणी गात्रं, द्वितीये गात्रभञ्जनम्।
तृतीये खेदनं याति, चतुर्थे कम्पते शिरः॥
पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम्।
सप्तमे गूढ़विज्ञानं परा वाचा तथाष्टमे॥
अदृश्यं नवमे देहं दिव्यं चक्षुस्तथामलम्।
दशमे परमं ब्रह्म भवेद्ब्रह्मात्म-सन्निधौ॥

तस्मिन् मनो विलीयते मनसि सङ्कल्प-

सप्रकारां नादोत्पत्तिमाह, नाद इति। चिण्यादयोऽनु-करणशब्दाः ; इति शब्दा अनुकरणत्वद्योतकाः ; 'घण्टानादः' घण्टाया इव नादः, एवमग्रेऽपि। नवमं परित्यज्येति, नव-मपर्य्यन्तान् त्यक्त्वा ब्रह्मभवनफलं दशममेव अभ्यसेत्॥

दशानां प्रत्येकं लक्षणानि, फलानि चाह, प्रथमे इति। चिञ्चिणीशब्दाकारं तद्वदिदं भवति। 'गात्र-भञ्जनं' गात्रभङ्गः इव भवति, 'खेदनं' खिन्न इव भवति, 'अमृतनिषेवणम्' अमृत-पानमिव। दशममिति, दशमश्चेदभ्यस्यति परमं ब्रह्म भवेत्। तस्य फलमाह, ब्रह्मात्मेति। तस्मिन् ब्रह्मणि आत्मनः सन्निधौ

## विकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयं ज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः प्रकाशते इति ॥ २ ॥

सति मनो 'विलीयते' विलीनं भवति, मनसि सङ्कल्प-विकल्प-रूपे गते सति, पुण्यञ्च पापञ्च तयोः समाहारे दग्धे सति, सदाशिवो भवति। शक्त्यात्मा च शिवशक्ति-रूपो भूत्वा सर्व-त्रावस्थितादिरूपो ब्रह्मरूपः प्रकाशते ब्रह्मैव भवति। इति शब्दो हंसवर्णन-समाप्त्यर्थः ॥ २ ॥

सनत्सुजातेन गौतमं प्रति पार्वती-परमेश्वर-संवादे हंस-वर्णनमुक्तम्। स संवादो यथा,—

ओँ ईश्वर उवाच।

अजपाराधनं देवि! कथयामि तवानघे!।
यस्य विज्ञानमात्रेण परं ब्रह्माधिगच्छति ॥ १ ॥
हंसं परं महेशानि! प्रत्यहं जपते नरः।
मोहान्धो यो न जानाति मोक्षस्तस्य न विद्यते ॥२॥
श्रीगुरोः कृपया देवि! ज्ञायते जप्यते यदा।
तस्योच्छासैस्तु निश्वासैस्तदा बन्धक्षयो भवेत् ॥३॥
उच्छासे चैव निश्वासे हंस इत्यक्षर-द्वयम्।
तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥४॥
नाभेरूर्द्ध्वं स निश्वासो हृदयाग्रे व्यवस्थितः।
षष्टिश्वासैर्भवेत् प्राणः षट्प्राणा नाड़िका मता ॥५॥
षष्टिनाड्या ह्यहोरात्रं जपसंख्या क्रमो मतः।
एकविंशति-साहस्रं षट्शताधिकमीश्वरि! ॥६॥
प्रत्यहं जपते प्राणी सान्द्रानन्दमयीं पराम्।

उत्पत्तिर्जप आरम्भोऽस्तिरस्य निवेदनम् ॥ ७ ॥
विना जपेन देवेशि ! जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाश-निकृन्तनी ॥ ८ ॥
एवं जपं महेशानि ! प्रत्यहं विनिवेदयेत् ।
गणेश-ब्रह्म विष्णुभ्यो हराय परमेश्वरि ! ॥९॥
जीवात्मने क्रमेणैव तथा च परमात्मने ।
षट् शतानि सहस्राणि षडेव च तथा पुनः ॥ १० ॥
षट् सहस्राणि च पुनः सहस्रञ्च सहस्रकम् ।
पुनः सहस्रं गुरवे क्रमेण विनिवेदयेत् ॥११॥
आधारे स्वर्णवत् स्मृत्वा वादि-सान्तानि संस्मरेत् ॥१२॥
द्रुतसौवर्ण-वर्णानि दलानि परमेश्वरि ! ।
स्वाधिष्ठाने हि हेमाभे वादिलान्तानि च स्मरेत् ॥१३॥
विद्युत्पुञ्ज-प्रभाभानि सुनीलमणिपूरके ।
डफान्तानि महानील-प्रभाणि च विचिन्तयेत् ॥१४॥
पिङ्गवर्ण-महावह्नि-कर्णिकाभानि चिन्तयेत् ।
कादिठान्तानि पत्राणि चतुर्थेऽनाहते प्रिये ! ॥१५॥
विशुद्धौ धूम्रवर्णे तु रक्तवर्णान् स्वरान् स्मरेत् ।
आज्ञायां विद्युदाभायां शुभौ हक्षौ विचिन्तयेत् ॥१६॥
कर्पूर-द्युति-संराजत्-सहस्रदल-नीरजे ।
नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि ! ॥ १७ ॥
एतेषु सप्त चक्रेषु स्थितेभ्यः परमेश्वरि ! ।
जपं निवेदयेदेनमहोरात्र-भवं प्रिये ! ॥ १८ ॥
अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ॥ १९ ॥
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥ २० ॥

अस्य पुरश्चरणरूपेणापि सारदातिलके विधानमुक्तम्, तद्यथा—

वियदर्द्धेन्दु-ललितस्तदादिः सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो ह्यक्षरः सुरपादपः ॥ १ ॥
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री च्छन्द ईरितम् ।
देवता जगतामादिः प्रोक्तोऽत्र गिरिजापतिः ।
हंसा षड्दीर्घ-युक्तेन कुर्य्यादङ्ग-क्रियां मनोः ॥ २ ॥
उद्यद्भानु-स्फुरित-तड़िदाकार मूर्द्धाम्बिकेशं
पाशाभीती वरद-परशू सन्दधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु नश्चन्द्रचूड़ं त्रिनेत्रम् ॥ ३ ॥
भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।
दशानां जुहुयात् सम्यक् ततः सिद्धो भवेन्मनुः ॥ ४ ॥
दीप्तादीप्तजिते पीठे प्रागुक्ते प्रयजेद्विभुम् ।
मूर्त्तिं मूलेन सङ्कल्प्य यजेदङ्गादिभिः सह ॥५॥
ऋतुं वत्सर रव्यारो दिग्दलेषु विदिक्षु च ।
अर्चयेद्दतजां गोजामशाक्या-मद्रिजां पुनः ॥६॥
लोकेश्वरांस्तदस्त्राणि पूजयेद्देवमन्वहम् ।
अर्घ्यञ्च विधिवद्दद्यात् प्राक् प्रोक्तेनैव वर्त्मना ॥७॥
मन्त्राढ्य मातृकापद्मे पूर्णकुम्भं निधाय तम् ।
पिधाय वामहस्तेन ततो मन्त्रेण संयतः ॥ ८ ॥
अष्टोत्तर-शतं मन्त्रं जपेत् [illegible]यं सुधामयम् ।
स्नात्वा तेनाभिषिञ्चेद्यं स भवेद्विगतामयः ॥ ९ ॥
आयुरारोग्य-विभवानमिताँल्लभते नरः ।
अनेनैव विधानेन विषार्त्तो निर्विषो भवेत् ॥ १० ॥
इन्दुभ्यां विगलत्-सुधा परिचितं मन्त्रान्त्यवीजं ततः

ओँ वेदप्रवचनं वेदप्रवचनम् ॥
इत्यथर्ववेदे हंसोपनिषत् समाप्ता ॥ २६ ॥

## परमहंसोपनिषत् ।

अथ योगिनां परमहंसानां कोऽयं मार्गः ?

प्रश्नो तत्परमामिताहं-शशिना संसिक्तमाद्यं स्मरन् ।
मन्त्री मन्त्रमिमं जपन् विष-गदोन्मादापमृत्यु-ज्वरान्
जित्वा वर्षशतं समग्र-विभवो जीवेत् सुखं बन्धुभिः”
इति ॥ ११ ॥

ओँ वेदप्रवचनमिति । इदं हंसनिरूपणम् अकाराद्यात्मकस्य वेदस्य ‘प्रवचनं’ निर्वचनहेतुः । तद्यथा हंसमन्त्रस्यैव पुम्प्रकृत्यात्मकस्य वर्णविपर्य्यासे सोऽहं भवति ; स च परमात्ममन्त्रः, तस्य चतुष्टयवद्व्यञ्जन-परित्यागे पूर्वरूपे च ओमिति भवति, स च शुद्धब्रह्मवाची, तत्प्रतीकस्य ओङ्काराच्चतस्रो व्याहृतयः, ताभ्यस्त्रिपदा, त्रिभ्यः पदेभ्यस्त्रयो वेदाः, वेदेभ्यो लोकत्रयमिति । द्विरुक्तिः समाप्त्यर्था ।

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपद-वाक्यानां हंसोपनिषद्दीपिका ॥
इति हंसोपनिषदो दीपिका सम्पूर्णा ॥ २६ ॥

---

ओँ बुद्धात्मा परमो हंसस्तस्योपनिषदुच्यते ।
त्रिखण्डाथर्वशिखरे चत्वारिंशत्तमी मता ॥ १ ॥

सन्न्यासोपनिषदि परमहंस-सन्न्यास उक्तः, हंसोपनिषदि

तेषां का स्थितिः? इति नारदो भगवन्तमुपगम्योवाच। तं भगवानाह।

च योग उक्तः, तत्र प्राप्तयोगस्य ज्ञानिनः कीदृशी लोके स्थितिः? इति सन्दिह्यते। यदुक्तम्,—

"स्थितप्रज्ञस्य का भाषा? समाधिस्थस्य केशव!।
स्थितधीः किं प्रभाषेत? किमासीत? व्रजेत किम्?"॥ इति।

तथा च, पामरत्व-शङ्कया अवज्ञा स्यात्, ततो महान् प्रत्यवाय इत्येतत् स्वरूपज्ञानार्थं परमहंसोपनिषदारभ्यते। 'योगः चित्तवृत्ति-निरोधः, तद्वन्तो योगिनः 'परमहंसाश्च' उत्पन्नतत्त्वज्ञानाः, तत्र निरुद्धचित्तोऽप्यणिमादि-सिद्धिषु वियुक्तिदशायां समासक्तः सन् आत्मनि संलीनो विपर्य्यस्तश्च परमपुरुषार्थाद् भ्रश्यतीति परमहंसपदं, परमहंसश्च विवेकेनैश्वर्य्येष्वसारतां बुद्धा विरज्यति। तदुक्तम्,—

"चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः।
इत्यस्याश्चर्य्य-जालेषु नाभ्युदेति कुतूहलम्"॥ इति।

परमहंसो विद्याबलेन विधि-निषेधान् लङ्घयति, ततः शिष्टविज्ञानं स्यात्। तदुक्तम्,—

"सर्वे ब्रह्म वदिष्यन्ति सम्प्राप्ते तु कलौ युगे।
नानुतिष्ठन्ति मैत्रेय! शिश्नोदर परायणाः"॥ इति॥

तदर्थं योगिग्रहणम्। अधिकारप्राप्त-निष्काम-कर्म्मानुष्ठानमपि योग एव। विशेषणद्वयेन स्थितप्रज्ञत्व-गुणातीतत्वासङ्गत्वादयोऽपि विशेषा दर्शिताः। यदुक्तं प्रश्न-प्रतिवचनाभ्यां वाशिष्ठे,

"एवं स्थिते हि भगवन् जीवन्मुक्तस्य सन्मतः।

# योऽयं परमहंसमार्गो लोकेषु दुर्लभतरो न

अपूर्वातिशयः कोऽसौ भवत्यात्मविदांवर !" ॥ १ ॥

वशिष्ठ उवाच ।

"नास्य कस्मिंश्चिदेवांशे भवत्यतिशयेन धीः ।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ॥ २ ॥
मन्त्रसिद्धैस्तपःसिद्धैर्योग-सिद्धैश्च भूरिशः ।
कृतमाकाश-यानादि तत्र का स्यादपूर्वता ॥ ३ ॥
एक एव विशेषोऽस्य न समो मूढबुद्धिभिः ।
सर्वत्रास्था-परित्यागः सदा निर्वासनं मनः ॥
एतावदेव खलु लिङ्गमलिङ्ग-मूर्त्तेः
संशान्त-संसृति-चिरभ्रम-निर्वृतस्य ।
तज्ज्ञस्य यन्मदन-कोप-विषाद-मोह-
लोभापदामनुदिनं निपुणं तनुत्वम्" ॥ ५ ॥ इति ॥

को मार्ग इति प्रष्टव्ये अयमिति वचनमदृष्टपूर्वं प्रत्यक्षतो दर्शय इति प्रश्नार्थम् । प्रकृतान्वयेनैव सिद्धे पुनस्तेषामिति वचनं गौरवार्थम् । 'नारदः' ब्रह्मपुत्रो देवर्षिः 'भगवन्तं' सनत्-कुमारं, स हि नारदाय शोकतरणाय भूमानमुपदिष्टवान् । यथा "छन्दोगानामाम्नातमधीहि भगव ! इति हो मससाद सनत्कुमारं नारदः" इत्यारभ्य "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्यन्तेन । स ततो लब्धसाक्षात्कारो मार्ग-स्थितौ पृच्छति विज्ञानदार्ढ्याय 'उप-गम्य' न्यायेनोपसन्नः सन् 'उवाच' पप्रच्छ । उत्तरोपक्रमः, तमिति । 'आह' ब्रवीति ; कालसामान्ये लट् ।

अज्ञातिशयस्य प्रशंसामाह योऽयमिति । यः पृष्टः सोऽयं

तु बाहुल्योऽपि, यद्येकोऽपि भवति, स एव नित्य-पूतस्थ इति, स एव वेदपुरुष इति विदुषो मन्यते ॥

---

मनसि स्फुरन् परमकाष्ठां प्राप्तस्य वैराग्यात् दृष्टचरत्वात् दुर्लभतरत्वम्। अत्यन्तासत्त्वमाशङ्क्याह, न त्विति। बाहुल्यमस्यास्तीति बाहुल्यः अर्शआद्यच् ॥

अयं मार्गोऽतिदुर्लभश्चेन्नादर्त्तव्यः,

"अतिक्लेशेन ये ह्यर्था अनर्थास्ते मता मम"।

इति न्यायादित्याशङ्क्याह, यद्दीति।

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" ॥

इति न्यायेन यद्येकः कश्चिद् भवति पुरुषधौरेयः। यथा जावालोपनिषद्युक्तं "तत्र परमहंसा नाम संवर्त्तकारुणि-श्वेतकेतु-दुर्वास-ऋभु-निदाघ-जडभरत-दत्तात्रेय-रैवतक-प्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्त" इति। स एव 'नित्यपूतः' परमात्मा, तत्र तिष्ठति नित्यपूतस्थः स एव न केवलो योगी, नापि केवलः परमहंसः, स एव 'वेदपुरुषः' वेदप्रतिपाद्यः पुरुषो ब्रह्मेति 'विदुषः' विद्वांसः ब्रह्मानुभवचित्तविश्रान्ति-प्रतिपादक-शास्त्रपारङ्गताः, मन्यते, वचनव्यत्ययः। तस्य ब्रह्मनिष्ठत्वन्तु अन्येऽपि मन्यन्ते, विद्वांसस्तु ब्रह्मत्वमेव मन्यते। तथा च स्मृतिः,—

"दर्शन-स्पर्शने हित्वा स्वयं केवलरूपतः।

यस्तिष्ठति स तु ब्रह्मण्! ब्राह्मणो ब्रह्मवित् स्वयम्" ॥ इति।

न तु बाहुल्योऽपि यद्येकोऽपि इत्यपिशब्दद्वयमार्थ्यपाठे दृश्यते, तत्र पदार्थे अपिशब्दावश्यतां द्योतयतः,

महापुरुषो यच्चित्तं तत् सदा मय्येवावतिष्ठते ; तस्मादहञ्च तस्मिन्नेवावस्थीयते ।

असौ स्वपुत्र-मित्र-कलत्र बन्ध्वादीन् शिखां

नित्यपूतस्थत्वं वेदपुरुषत्वञ्च मुखतो विषदयन् अर्थात् का स्थितिरिति प्रश्नस्योत्तरं सूचयति, महापुरुष इति। महापुरुषत्वे हेतुः 'यत्' यस्मात् चित्तं तदीयं 'मय्येव' भगवत्यात्मनि अवतिष्ठते, तत् तस्मात् महापुरुषः संसारगोचराणां मनोवृत्तीनाम् अभ्यास-वैराग्याभ्यां निरुद्धत्वादात्मन्येव स्थापनात् भगवान् शास्त्रसिद्धं परमात्मानं स्वानुभवेन परामृशन् मयीति व्यपदिशति, यस्मात् योगी मय्येव चित्तं स्थापयति, तस्मात् 'अहञ्च' अहमपि परमात्म-स्वरूपत्वेन 'तस्मिन्नेव' योगिनि प्रादुर्भूतः 'व्यवस्थीयते' अवतिष्ठे, पुरुषादिव्यत्ययः, नान्येषु योग्यताहीनेषु।

इदानीं पृष्टमार्गमुपदिशति, असाविति। 'असौ' जनकयाज्ञवल्क्यादिन्यायेन गार्हस्थ एवोत्पन्न-ज्ञानोऽयं विद्वान् चित्तविश्रान्ति-सिद्धये स्वपुत्रादि सन्न्यस्य कौपीनादि परिग्रहेत्। यद्यपि विदुषोऽर्थसिद्ध एव सन्न्यासः, तथापि ज्योतिष्टोमे कृष्णविषाणया कण्डूयेदिति प्रतिपत्तिवदयं लौकिको वैदिकस्य त्यागः। न च

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।

नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित्" ॥

इत्यादि-स्मृति-विरोधः, सत्यपि ज्ञाने विश्रान्ति-रहितस्य तृप्त्यभावेन विश्रान्ति-सम्पादन-लक्षण-कर्त्तव्य-सद्भावेन कृतकृत्यत्वाभावात् चित्त-विश्रान्ति-प्रतिबन्ध-वारणस्य दृष्टफलस्य

**यज्ञोपवीतञ्च यागञ्च स्वाध्यायञ्च सर्वकर्म्माणि सन्न्यस्यायं ब्रह्माण्डञ्च हित्वा कौपीनं दण्डमाच्छादनञ्च स्वशरीरस्योपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्।**

सम्भवेन श्रवणादि-विधिवन्नानादृष्ट-फलकल्पना; तस्मात् विविदिषुरिव विद्वानपि गृहस्थो नान्दीमुख-श्राद्धोपवास-जागरणादि विधिपूर्वकमेव सन्न्यसेत्; प्रकृतिवद्विकृतिरिति न्यायेनात्र विविदिषा सन्न्यासवत् प्रैषमन्त्रेणैव पुत्रवित्तादि त्यागः। बन्धादीत्यादिशब्देन भृत्य-पशु-चेत्रादि-लौकिक-परिग्रहादि-विशेषाः संगृह्यन्ते। शिखां यज्ञोपवीतञ्च यागञ्च स्वाध्यायञ्चेति चकारेण तदर्थोपयुक्तानि पद-वाक्य-प्रमाण-शास्त्राणि, वेदोपबृंहणादीनि, इतिहास-पुराणानि च समुच्चिनोति। औत्सुक्यनिवृत्तिमात्र-प्रयोजनानां काव्य-नाटकादीनां त्यागः कैमुतिकन्याय-सिद्धः। सर्वकर्म्माणीति सर्वशब्देन लौकिक-वैदिक-नित्य-नैमित्तिक-निषिद्ध-काम्यानि संगृह्यन्ते। पुत्रादि-त्यागेनैहिकभोगाः परिहृताः। सर्वकर्म्मत्यागेन आमुष्मिक-भोगाशा चित्तविक्षेप-कारिणी परिहृता। अयमसौ परिग्रहेदित्यन्वयः, अयमसौ अहमागममितिवत् ब्रह्माण्डञ्चेति ब्रह्माण्ड-त्यागेन तत्प्राप्तिहेतोर्विराडुपासनस्य त्यागः। चकारेण सूत्राव्याकृतात्म-प्राप्तिहेतोर्हिरण्यगर्भोपासनस्य; तत्त्वज्ञान-हेतूनां श्रवणादीनां समुच्चयस्य। पुत्रादि अव्याकृतोपासनान्तमैहिकमामुष्मिकञ्च सर्वं प्रैषमन्त्रोच्चारणेन परित्यज्य कौपीनादिकं परिगृह्णीयात्। आच्छादनञ्चेति चकारेण पादुकादि-परिग्रहः समुच्चितः। स्मृतिश्च,—

तच्च न मुख्योऽस्ति, को मुख्यः ? इति चेदयं मुख्यो न दण्डं न कमण्डलुं न शिखं न यज्ञोपवीतं न स्वाध्यायं नाच्छादनं चरति परमहंसः, न च शीतं न चोष्णम्।

---

"कौपीनं युगलं वासः कन्थां शीत-निवारिणीम्।

पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य सङ्ग्रहम्" ॥ इति।

स्वशरीरोपभोगो नाम कौपीनेन लज्जाव्यावृत्तिः, दण्डेन गो-सर्पाद्युपद्रव-परिहारः, आच्छादनेन शीतादि-परिहारः। चकारेण पादुकाभ्यामुच्छिष्टदेश-स्पर्शादि-परिहार समुच्चिनोति। लोकस्योपकारो नाम दण्डादि-लिङ्गैनैतदीयमुत्तममाश्रमं परिज्ञाय तदुचिताभिवन्दन-भिक्षा-प्रदानादि-प्रवृत्त्या सुकृतसिद्धिः। चकारात् सन्न्यास-मर्य्यादायाः शिष्टाचार-प्राप्तायाः पालनं समुच्चीयते।

कौपीनादि-परिग्रहस्यानुकल्पत्वमभिप्रेत्य मुख्यत्वं प्रतिषेधति, तच्च न मुख्योऽस्तीति। यत् कौपीनादि-परिग्रहणमस्ति तदस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति; किन्त्वनुकल्प एव, विविदिषा सन्न्यासिनस्तु दण्डग्रहणं मुख्यमिति, दण्डवियोगस्य निषेधः स्मर्य्यते,—

"दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते।

न दण्डेन विना गच्छेदिषुक्षेपत्रयाद् बुधः" ॥ इति।

प्रायश्चित्तमपि दण्डत्यागे प्राणायामशतं स्मर्य्यते,

"दण्डत्यागे शतं चरेत्" इति। योगिनः परमहंसस्य मुख्यं कल्पं पृच्छति, कोऽयं मुख्य इति चेदिति। उत्तरमाह, अयं मुख्य इति। अयं कः ? इत्यत आह, न दण्डमित्या-

न सुखं न दुःखं न मानापमानञ्च षडूर्म्मि-रहितं न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवं निन्दा-गर्व-मत्सर-दम्भ-दर्पेच्छा-द्वेष-सुख--दुःख-काम-क्रोध-रोष-लोभ--मोह-मद-हर्षासूयाहङ्कारादींश्च हित्वा स्वं वपुः कुणप-मिव दृश्यते।

---

दिना। शिखम् इति छान्दसो ह्रस्वः। न स्वाध्यायमिति पाठः। 'चरति' गच्छति निरुद्धाशेष-चित्तवृत्तेर्योगिनः शीतादि नास्ति तत्प्रत्ययाभावात्। यथा बालस्य लीलासक्तस्य शीताद्य-भावः तथा परमात्मन्यासक्तस्य योगिनः। न चोष्णमिति वर्षा-भावसमुच्चयार्थश्चकारः, शीतादि-निषेधे तज्जन्यसुखादेरप्यभा-वात्।

न सुखमित्यादि। 'मानः' पुरुषान्तरेण सम्पादितः सत्कारः, 'अपमानः' तिरस्कारः, यदा योगिनः स्वात्म-व्यतिरिक्तं पुरुषा-न्तरमेव न प्रतीयते, तदा मानापमानौ दूरापास्तौ। चकारः शत्रु-मित्र-राग-द्वेषादि-द्वन्द्वाभावं समुच्चिनोति। 'षडूर्म्मयः'—

"क्षुत्-पिपासे शोक-मोहौ जरा-मरणमेव च"।

तेषां त्रयाणां द्वन्द्वानां प्राण-मनो-देह-धर्म्मत्वादात्मतत्त्वाभि-मुखस्य योगिनः तद्वर्जनं युज्यते। न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवमित्यादिग्रन्थः शिष्टैर्व्याख्यातः। अस्त्वेवं समाधि-दशायां शीताद्यभावावुत्थानदशायां निन्दादि-क्लेशः संसारिणमिवैनं बाधेतैव इत्यत आह, निन्देति। रोष-मदावनार्य्यौ, विरोधिभिः पुरुषैः स्वस्मिन्नापादित-दोषो-क्तिर्निन्दा, अन्येभ्योऽहमधिक इति चित्तवृत्तिर्गर्वः, विद्या-

यतस्तद्वपुरपध्वस्तं संशय-विपरीत-मिथ्या-ज्ञानानां यो हेतुस्तेन नित्यनिवृत्तः।

---

धनादिभिरस्य सदृशो भवामीति बुद्धिर्मत्सरः, परेषामग्रे जप-ध्यानादि-प्रकाशनं दम्भः, भर्त्सनादिषु बुद्धिर्दर्पः, धनाद्यभि-लाष इच्छा, शत्रुवधादि-बुद्धिर्द्वेषः, अनुकूल-लाभेन बुद्धि-स्वास्थ्यं सुखं, तद्विपर्य्ययो दुःखं, योषिदाद्यभिलाषः कामः, कामितार्थ-विघातजन्यो बुद्धिविक्षोभः क्रोधः, प्राप्तस्य धनस्य त्यागासहिष्णुत्वं लोभः, हितेष्वहितबुद्धिरहितेषु हितबुद्धि-र्मोहः, चित्तगत-तुष्ट्यभि-व्यक्ति-मुख-विकाशादि-हेतुर्धीवृत्ति-र्हर्षः, परगुणेन दोषारोपणमसूया, देहेन्द्रियादि-सङ्घातेष्वा-त्मत्वभ्रमोऽहङ्कारः। आदिशब्देन भोग्यवस्तुषु ममत्वाकार-समीचीनत्वादि बुद्धयो गृह्यन्ते। चकारो यथोक्त-निन्दादि-विपरीत-स्तुत्यादि-समुच्चयार्थः। एतान् निन्दादीन् 'हित्वा' पूर्वोक्तवासनाक्षयाभ्यासेन परित्यज्य अवस्थीयते इति पूर्वेणा-न्वयः।

ननु विद्यमाने देहे कथं निन्दादि-परित्यागः? अत आह, स्वं वपुः कुणपमिव दृश्यते इति। पूर्वं यत् स्वकीयं वपुः तदानीं योगिना चैतन्यभूतेन मृतकमिवालोक्यते इत्यर्थः। लोकः स्पर्शभीत्या कुणपं यथा दूरस्थोऽवलोकयति, तथा योगी तदात्मत्वाभ्युदय-भिया तटस्थो देहं नित्यमात्मनो विविनक्तीति भावः।

तत्र हेतुमाह, यतस्तद्वपुरपध्वस्तमिति। 'यतः' हेतोः, तद्वपुः आचार्य्योपदेशानुभवैः 'अपध्वस्तं' चिदात्मभावान्निरा-कृतम्, 'अतः' चैतन्य-वियुक्तस्य देहस्य शवतुल्यतया दृश्यमान-त्वात् सत्यपि देहे निन्दादित्यागो घटते इत्यर्थः।

तन्नित्यबोधः, तत् स्वयमेवावस्थिति-रिति।

ननु उत्पन्नो दिग्भ्रमो यथा सूर्य्योदय-दर्शनेन विनष्टोऽपि कदाचिदनुवर्त्तते, तथा चिदात्मनि संशयाद्यनुवृत्तौ निन्दादि-क्लेशः पुनः प्रसज्येत इत्याशङ्क्याह, संशयेति। आत्मा कर्तृत्वादि-धर्म्मोपेत-स्तद्रहितो वा इत्यादि संशयज्ञानं, देहादिरूप आत्मेति विपरीतज्ञानम्। तद्धेतुश्चतुर्विधः, अनित्याशुचि-दुःखा नात्मसु नित्य-शुचि-सुखात्म-ख्यातिरविद्येति पतञ्जलिसूत्रात्। 'अनित्ये' गिरि-नदी-समुद्रादौ नित्यत्व-मिथ्याभ्रान्तिरेका अविद्या, 'अशुचौ' पुत्र-कलत्रादौ शुचित्वबुद्धिर्द्वितीया, 'दुःखे' कृषि-वाणिज्यादौ सुखत्व-भ्रान्तिस्तृतीया, 'गौणात्मनि' पुत्रादौ अन्नमयादिके तु मुख्यात्मत्व-भ्रान्तिश्चतुर्थी; एषां संशयादीनां 'हेतुः' अद्वितीय-ब्रह्मतत्त्वावरकमज्ञानं, तद्वासना च; तत्राज्ञानं तस्य महावाक्यार्थ-बोधेन निवृत्तम्; वासना च योगाभ्यासेन निवृत्ता। दिग्भ्रान्तौ त्वज्ञाने निवृत्तेऽपि तद्वासनायाः सद्भावात् यथापूर्वं व्यवहारः; योगिनस्तु भ्रान्तिहेतु-राहित्यात् कुतः संशयादीन्यनुवर्त्तेरन्। तदयमर्थः, संशयादीनां यो हेतुरज्ञानं तद्वासना च, तेन हेतुद्वयेन योगी 'नित्यनिवृत्तः, अधिकरणे क्तः, अज्ञानतद्वासनयोर्निवृत्तिस्तत्र नित्या, पुनस्तयोरनुद्भवादिति; तेन नित्यनिवृत्तः अज्ञान-रहित इति यावत्।

सवासनाऽज्ञान-निवृत्तेर्नित्यत्वे हेतुमाह, तन्नित्य--बोध इति। 'तस्मिन्' परमात्मनि नित्यो बोधो यस्य सः; नित्यभूतस्य इत्यर्थः। योगी हि विज्ञाय प्रज्ञां कुर्वीतेति मतमनुसृत्य चित्तविक्षेपान् योगेन परिहृत्य नैरन्तर्य्येणामरणमात्म-

तं शान्त-मचल--मद्वयानन्द--विज्ञानघन एवास्मि ; तदेव मे परमं धाम, तदेव शिखा च, तदेवोपवीतञ्च, यदा परे नित्यपूतस्थः तदेवावस्थानम् ।

---

विषयामेव प्रज्ञां करोति ; तेन बोधस्य नित्यत्वम्, तन्नित्यत्वात् ।

तद्विनाशश्वरयोरज्ञान-तद्वासनयोरपि निवृत्तिर्नित्येत्यर्थः । "तन्नित्य-पूतस्थः" इति केषाञ्चित् पाठः । 'तत्र' तस्मिन् 'नित्यपूते' परमात्मनि स्थित इत्यर्थः ।

बुध्यमानस्य परमात्मनस्तार्किकेश्वरवत् तटस्थत्व-शङ्कां वारयति, तत् स्वयमिति । यत् वेदान्तवेद्यं परं ब्रह्मास्ति, तत् स्वरूपं, न तु स्वस्मादन्य इत्येवं निश्चित्य योगिनोऽवस्थितिर्भवति ।

अनुभव-प्रकारमाह, तं शान्तमिति । पदत्रये द्वितीया प्रथमार्थे द्रष्टव्या । यः परमात्मा 'शान्तः' क्रोधादि-विक्षेप-रहितः, 'अचलः' गमनादि-क्रिया-रहितः, 'अद्वयः' स्वगत-सजातीय-विजातीयभेद-रहितः, सच्चिदानन्दैक-रसोऽस्ति, स एवाहमस्मि 'तदेव' ब्रह्मतत्त्वं 'मे' मम योगिनः 'परमं धाम' वास्तवं स्वरूपं, नत्वेतत् कर्तृत्व-भोक्तृत्वादि-युक्तं तस्य मायिकत्वात् ।

आचार-त्यागी दोषमाशङ्क्य निरस्यति, तदेव शिखा च तदेवोपवीतञ्चेति । 'तदेव' ज्ञानमेव शिखा चोपवीतञ्च । चकाराभ्यां मन्त्र-द्रव्यरूपे अपि कर्माङ्गे । ज्ञानमेव यदाम्नातमाथर्वणिकैर्ब्रह्मोपनिषदि, "सशिखं वपनं कृत्वा" इत्यादि । अत्र

परमात्मात्मनोरेकत्व-ज्ञानेन तयोर्भेद एव विभग्नः, या सा सन्ध्या। सर्वान् कामान् परित्यज्याद्वैते परमस्थितिः ॥ २ ॥
ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञान-वर्जितः।

"यदा पदे नित्यपूतस्थस्तदेवावस्थानम्" इति ग्रन्थः शिष्टैर्नादृतः।

सन्ध्यालोपे दोषमाशङ्क्याह, परमात्मात्मनोरेकत्व-ज्ञानेन तयोर्भेद एव विभङ्गः, या सा सन्ध्येति। जीव-ब्रह्मणोरैक्य-ज्ञानेन महावाक्यत्वेन तयोर्यः प्रतीतो भेदः विशेषेण भग्नः पुनर्भ्रान्त्यनुदयात्, 'या' इयमेकत्व-बुद्धिः सैवोभयोरात्मनोः सन्धौ जातत्वात् सन्ध्या, अहोरात्रयोः सन्धावनुष्ठीयमाना क्रिया सन्ध्या यथा, तद्वत्, तथा च नास्य प्रत्यवायः।

कोऽयं मार्ग इत्यस्य असौ स्वपुत्रेत्यादिना उत्तरमुक्तम्। का स्थितिरित्येतस्य महापुरुष इत्यादिना सङ्क्षिप्योत्तरमुक्तम्। संशय-विपर्य्ययेत्यादिना तदेव प्रपञ्च्य इदानीमुपसंहरति, सर्वान् कामान् परित्यज्याद्वैते परमस्थितिरिति। क्रोध-लोभादीनां कामपूर्वकत्वात् काम-परित्यागेन चित्तदोषाः सर्वे त्यज्यन्ते। अतएव वाजसनेयिनाम् "अथो खल्वाहुः काममयः स एवायं पुरुषः" इति ॥ २ ॥

ननु माभूत् कर्म्ममार्ग-त्यागे दोषः, चतुर्थाश्रम-लिङ्गत्याग-निमित्तो दोषस्तस्य स्यादेव इत्यत आह, ज्ञानदण्ड इत्यादि। त्रिदण्डिनो यथा वाग्दण्डो मनोदण्डः कायदण्डश्चेति त्रिविधो

स याति नरकान् घोरान् महारौरव-सञ्ज्ञकान् ॥

इदमन्तरं ज्ञात्वा स परमहंसः ।

आशाम्बरो ननमस्कारो नस्वधाकारो ननिन्दा-स्तुतिर्नवषट्कारो यादृच्छिको भवेद्भिक्षुः ।

---

दण्डः ; एवमेकदण्डिनो द्विविधः, ज्ञानदण्डः, काष्ठदण्डश्चेति । तेषां स्वरूपञ्च दक्षेणोक्तम्,

"वाग्दण्डे मौनमातिष्ठेत् कर्म्मदण्डे त्वनीहता ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते" ॥ इति ॥

एवं सति मौनादीनां वागादि-दमनहेतुत्वात् यथा दण्डत्वं, तथैव अज्ञान-तत्कार्य्ययोर्दमन-हेतोर्ज्ञानस्यापि दण्डत्वम् । अयं ज्ञानदण्डो 'येन' परमहंसेन धृतः, स एव मुख्य एकदण्डी-त्युच्यते । मानसस्य ज्ञानदण्डस्य चित्तविक्षेपेण विस्मृतिर्मा-भूदिति स्मारकः काष्ठदण्डो ध्रियते । एतदेव ज्ञात्वा वेष-मात्रेण पुरुषार्थ-सिद्धिमभिप्रेत्य येन परमहंसेन काष्ठदण्डो धृतः, स बहुविध-यातनोपेतत्वात् घोरान् महारौरव-सञ्ज्ञ-कान् नरकान् 'याति' प्राप्नोति । तत्र हेतुः, यतः 'सर्वाशी' वर्ज्यावर्ज्यमकृत्वा सर्वमश्नाति । 'इदं' ज्ञानदण्ड-काष्ठदण्ड-योर्यत् 'अन्तरम्' उत्तमत्वाधमत्व-लक्षणमुक्तं, तज्ज्ञात्वा उत्तमं ज्ञानदण्डं यो धारयति, स एव परमहंसो मुख्यो ज्ञेय इत्यर्थः ।

ननु माभूदस्य काष्ठदण्डः, अन्या तु चर्य्या कीदृशी ? इत्याशङ्क्याह, आशाम्बर इत्यादि । आशा एवाम्बरं यस्य सः दिग्वासाः, न नमस्कारः कर्त्तव्यो यस्य स ननमस्कारः । निषे-धार्थ-नकारस्य समासत्वान्नलोपाभावः । तदुक्तं, "निर्नमस्कार-मस्तुतिम्", इति । श्राद्धादावपि न स्वधाकारोऽस्य स तथा,

नावाहनं न विसर्जनं न मन्त्रो न ध्यानं नोपासनञ्च, न लक्ष्यं, नालक्ष्यं, न पृथक्, नापृथक्, नाहं, नत्वम् न सर्वञ्चानिकेत-स्थिति-रेव स भिक्षु-र्हाटकादीनां नैव परिग्रहेत्, न लोकं नावलोकनञ्च।

---

न निन्दास्तुतिः। निन्दागर्वेत्यादि-वाक्ये परैः क्रतया निन्दया अस्य क्रोधो निवारितः; अत्र तु स्वकर्तृके निन्दा-स्तुती निषिध्येते। 'याद्दच्छिकः' निर्बन्ध-रहितः 'भवेत्' स्यात् 'भिक्षुः' परमहंसः।

नन्वस्ति निर्बन्धः,

"भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्च्चनम्।
कर्त्तव्यानि षडेतानि सर्वदा नृपदण्डवत्"॥

इति मुख्यस्य भेदादर्शित्वात्तन्न सम्भवति इत्यभिप्रायेणाह, नावाहनमित्यादि। 'ध्यानं' स्मरणम् 'उपासनं' परिचर्य्येति भेदः। यथा स्तुति-निन्दादि लौकिकं न, यथा देवपूजादि धर्म्मशास्त्रीयं न, तथैव तत्त्वमस्यादि ज्ञानशास्त्रीयमपि।

लक्ष्य—वाच्यादि व्यवहार्य्यं योगिनामित्याह, न लक्ष्य-मिति। साक्षिचैतन्यं त्वम्पदेन लक्ष्यं, देहादि-विशिष्टं चैतन्यं त्वंपदेन वाच्यं, न लक्ष्यं नालक्ष्यं तदपि तस्य न व्यवहार्य्य-मित्यर्थः। चित्पदार्थो जड़ात् पृथक्, तत् त्वम्पदयोर्वाच्यं पृथक्, लक्ष्यं पृथक् इत्यपि योगिनो नास्ति; स्वदेह-निष्ठो वाच्यो-ऽर्थोऽहं, परदेह—निष्ठस्त्वं, तदप्यस्य नास्ति; सर्वं खल्विदं ब्रह्मेत्यपि न, चकारादसर्वं न किञ्चिदस्तीत्यपि तस्य नास्ति, तच्चित्तस्य ब्रह्मणि विश्रान्तत्वात्; अतएव अनिकेत-स्थितिरेव

अथावलोकनमात्रेण अवाधक इति चेत्, तद्बाधकोऽस्त्येव। यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टञ्च स ब्रह्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टञ्च स पौल्कसो भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यञ्च स आत्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं यो न दृष्टञ्च न स्पृष्टञ्च न ग्राह्यञ्च सर्वे कामा मनोगता व्यावर्त्तन्ते।

स भिक्षुः यदि नियतवासार्थं कञ्चिन्मठं सम्पादयेत्, तदा तस्मिन् ममत्वे सति तदीयहानौ वृद्धौ वा चित्तं विक्षिपेत्। मठवत् 'हाटकादीनां' सुवर्ण-रजतादि-पात्राणां भिक्षाचमनाद्यर्थानामेकमपि 'नैव परिग्रहेत्' नापि गृह्णीयात् विकरण-व्यत्ययः। यदाह यमः,—

"हिरण्मयानि पात्राणि कृष्णायस-मयानि च।
यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः"॥ इति।

तथा न 'लोकं' जनं शिष्यवर्गं परिग्रहेत्। न केवलं लोकं त्यजेत्, किन्तु नावलोकनञ्च सान्निध्याल्लोकस्यैवावलोकनञ्च न कुर्य्यात्।

योगिनो लौकिक-वैदिक-व्यवहार-गतानां वाधकानां वर्जनमभिहितम्। अथ प्रश्नोत्तराभ्यामत्यन्त-वाधकं प्रदर्श्य तद्वर्जनमाह, अवाधक इति चेत् तद्बाधकोऽस्त्येवेति। अथाव-लोकनमात्रेणेति प्रक्षिप्तम्, वाक्योपक्रम आकरः। तत्रापि हिरण्यस्यात्यन्त-वाधकत्वमाह, यस्माद्भिक्षुरित्यादिना। 'रसेन' प्रेम्णा। ब्रह्महा इति, ब्रह्मैव सत्यमन्यत् मिथ्या इत्यनङ्गी-

दुःखे-नोद्विग्नः, सुखे निस्पृहः, त्यागो रागे, सर्वत्र शुभाशुभयोरनभिस्नेहः, न द्वेष्टि, न प्रमोदश्च,

कारात् ब्रह्म तेन हतमिव भवति, तेन ब्रह्महा भवेत्। यत् स्मृतिः,

"ब्रह्म नास्तीति यो ब्रूयात् द्वेष्टि ब्रह्मविदश्च यः।
अभूतब्रह्मवादी च त्रयस्ते ब्रह्म-घातकाः॥ इति॥

यद्वा ब्रह्मघ्न इति तस्य नरको भवति। पौल्कस इति, निषादाच्छूद्रायां जातः पुक्कसः, प्रज्ञादित्वात् पौक्कसः, वर्ण-व्यत्ययेन पौल्कसः, तत्तुल्य इति यावत्। यत् स्मृतिः,

"पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत्।
धीपूर्वं रेत उत्सर्गो द्रव्यसङ्ग्रह एव च"॥ इति॥

आत्महा इति, असङ्गस्याभोक्तुरात्मनो हिरण्यसङ्गित्व-भोक्तृत्वाङ्गीकारात्। यत् स्मृतिः,

"अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चौरेणात्मापहारिणा"॥ इति।

श्रुतिरपि तस्यान्धतामिस्र-लोकानाह,—

"असूर्य्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः"॥ इति॥

न दृष्टञ्च न स्पृष्टञ्च ग्राह्यञ्चेति इच्छेदिति शेषः। चकारैः श्रुतञ्च कथितञ्च व्यवहृतञ्च नेच्छेदिति समुच्चयः। दर्शन-स्पर्शन-ग्रहण-तदभिलाष-पूर्वक हिरण्य-वृत्तान्त-श्रवण-तद्गुण-कथन-तदीय-क्रियादि-व्यवहारा अपि प्रत्यवाय-हेतव इत्यर्थः। हिरण्य-वर्जनस्य फलमाह, सर्वे कामा मनोगता इति। पुत्र-भार्य्यादीनां हिरण्य-मूलकत्वादिति भावः।

कामनिवृत्तेः स्थितप्रज्ञत्वं फलमाह, दुःखेनोद्विग्न इति।

